प्रतिदत्ताक्षरमिदं चित्रम्—'च्यावितस्यास्पदेऽन्येन प्रतिद्त्तेन केनचित् । प्रतीयतेऽन्यो यत्रार्थः प्रतिदत्ताक्षरं हि तत् ॥' इति तल्लक्षणात् । तदत्र विस्वर एव व्यञ्जने सङ्केतः 'प्रतिदत्ताक्षरे चित्रे विस्वरं व्यञ्जनाक्षरम् । संकेतितं....॥' इत्युक्तत्वात् । भेद इत्यत्र भकारदकारोत्तरावकारावुच्चारणार्थौ । एवमग्रेऽपि प्रतिदत्ताक्षरेषु सर्वत्र ज्ञेयम् ॥ १९ ॥

**भो रम्भोरु वदान्यमार्गमनुसर्ताऽन्यः प्रकृत्याऽस्ति कः दानश्रीरसुरेश्वरे स्थिरतरा ह्यस्मिन्निति ज्ञायताम् । लोके सर्वविदा प्रियस्थितिजुषा को वा समानो मया यद्येवं तव वाक्सदा भवति रे क्रव्याद नाहं सहे ॥ १६ ॥**

जगति सामान्यस्त्रीव इयमपि धनकनकवस्त्रादिप्रदानेन अनुरज्यतीति विभ्रान्तो रावण आह— भो रम्भोर्विति ॥ भोस् इति सकारान्तस्संबोधनवाचको निपातः । रम्भोरु! रम्भे कदलीस्तम्भाविव ऊरू यस्यास्सा रम्भोरूः तस्यास्सम्बुद्धिः 'ऊरूत्तरपदादौपम्ये' इत्यूङ्प्रत्ययः । नदीत्वाद्ध्रस्वः । प्रकृत्या स्वभावेन 'प्रकृत्यादिभ्य उपसंख्यानम्' इति तृतीया । वदान्यमार्गं वदान्यस्य दानशौण्डस्य 'स्युर्वदान्यस्थूललक्षदानशौण्डा बहुप्रदे' इत्यमरः । मार्गं रीतिमित्यर्थः । अनुसर्ता अनुसरन् अनुपूर्वकात् सरतेस्तृन् । 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' इति षष्ठीनिषेधात्

द्वितीया । अन्यः मत्तः परः कः अस्ति? न कोपीत्यर्थः । लोके अहमेक एव दानशीलः अतो भवत्याः भवदीयजनस्य च सकलेष्टार्थान् कलयामीति भावः । उक्तं च श्रीमद्रामायणे सीतां प्रति रावणेन—

लोकेभ्यो यानि रत्नानि संप्रमृथ्याहृतानि वै ।
तानि मे भीरु सर्वाणि राज्यं चैतदहं च ते ॥
विजित्य पृथिवीं सर्वां नानानगरमालिनीम् ।
जनकाय प्रदास्यामि तव हेतोर्विलासिनि ॥
यथेष्टं च प्रयच्छ त्वं पृथिवीं वा धनानि च ।
ललस्व मयि विस्रब्धा धृष्टमाज्ञापयस्व च ॥
मत्प्रसादाल्ललन्त्याश्च ललन्तां बान्धवास्तव ।
पिब विहर रमस्व भुङ्क्ष्व भोगान् ।
धननिचयं प्रदिशामि मेदिनीं च ॥
मयि लल ललने यथासुखं त्वं ।
त्वयि च समेत्य ललन्तु बान्धवास्ते ॥ इति ।

स्वदानसम्पदः स्वाभाविकत्वात् तस्याः न कदाऽपि हानिः भविष्यतीत्याशयेन स्वदानस्थैर्यं विशिनष्टि दानश्रीरित्यादिना— अस्मिन् त्वत्पुरोवर्तिनीत्यर्थः । असुरेश्वरे राक्षसचक्रवर्तिनि दानश्रीः दानसंपत् स्थिरतरा हि अत्यन्तं स्थिरैव । हिरवधारणे '**हि हेताववधारणे**' इत्यमरः । इति ज्ञायतां बुद्ध्यताम् । "एष मां कंचित्कालं अभिलषितार्थप्रदानेन परितोष्य ततः किमपि न

दास्यति" इति न जानीहि। नाहं सामान्यः पुरुषः स्वाभाविकदानशीलतया आजीवितं ते अभिलषितार्थान् प्रदास्याम्येव मयि प्रसन्ना भवेति भावः । लोके सर्वविदा सर्वमिङ्गितज्ञानपूर्वकं दानसन्मानादिना यत् जनमनःप्रीणनादिकं कर्तव्यं तदखिलं वेत्तीति तथोक्तेन । अत एव प्रियस्थितिजुषा प्रियां सर्वजनेष्टां स्थितिं वृत्तिं जुषते सेवत इति तथोक्तेन च । जुषेः कर्तरि क्विप् । मया को वा समानः? अस्तीति शेषः । न कोपीत्यर्थः। "तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्" इति तृतीया ॥

सीता प्रत्याह—

रे क्रव्याद! राक्षस! तव वाक् उक्तिः एवं त्वदुक्तप्रकारेण सदा सन्ततं भवति यदि प्रवर्तते चेत् अहं न सहे न मर्षये। सकृदुक्तं कथंचित् सह्यं स्यात् त्वया सततमेवमुक्तं चेत् कुपिता त्वां शपाम्येवेति भावः ॥

प्रत्युक्तिगूढार्थस्तु-

रे क्रव्याद! तव वाक् एवं, सदा दावर्णेन सह वर्तत इति तथोक्ता भवति यदि अहं न सहे देत्याकारकं वर्णं विरहय्य त्वदुक्तं वद तन्मे रोचत इत्यर्थः ॥

एवं च—

**भो रम्भोरु वन्यमार्गमनुसर्ताऽन्यः प्रकृत्याऽस्ति कः**

न श्रीरसुरेश्वरे स्थिरतरा ह्यस्मिन्निति ज्ञायताम् ।
लोके सर्वविप्रियस्थितिजुषा को वा समानो मया ॥

इति वदेति फलितम् ।

भो रम्भोरु! प्रकृत्या स्वभावेन वन्यमार्गं वने भवं वन्यं मृगाणां समूहो मार्गं । समूहार्थेऽण् । वनमृगसमूहमिति यावत् । वन्यानां वनमृगाणां मार्गमिति वा । अनुसर्ता अन्यः कोऽस्ति? क्षुद्रवनमृगस्वभावो मदन्यः कोपि नास्तीत्यर्थः । शार्दूलादिवनमृगवत् क्रूरो मांसाशी ज्ञानरहितश्चेति भावः । अस्मिन् असुरेश्वरे श्रीः राज्यलक्ष्मीः स्थिरतरा बहुकालवर्तिनी न हि नैव इति ज्ञायताम् । एतादृशे वनमृगस्वभावे राज्यलक्ष्मीः कथं चिराय वर्तेत? अचिरादेव नश्यतीति दृढं विजानीहीत्यर्थः । लोके सर्वविप्रियस्थितिजुषा सर्वेषां विप्रियामनभिमतां स्थितिं वृत्तिं जुषत इति तथेत्यर्थः । सर्वजनविरोधिनस्तु विनाशस्स्यादेवेति भावः ।

च्यावितक्षरमिदं चित्रम् ॥ १६ ॥

**मानिन्यः कति वा न सन्ति सततं मे पादवश्या गृहे त्वामानीय तथाऽप्यहं बहुविदत्त्यासक्तितः कामये ॥ कर्तव्या न मुधा त्वया मयि ननु क्षोणीसुते दोषधीः वाङ्क्रियाति कुतस्सदा खल हितापेता तवेयं खलु ॥ १७ ॥**

मानिन्य इति ॥ ननु क्षोणीसुते! अयि सीते! मे मम

गृहे सततं सर्वकालं पादवश्याः वशमधीनत्वं गताः, वश्याः पादयोर्वश्याः पादमेविन्य इत्यर्थः । 'वशं गतः' इति यत्प्रत्ययः। मानिन्यः स्त्रियः कति वा कियत्यः न सन्ति? बह्वयस्सन्त्येवेत्यर्थः । तथा तेन प्रकारेण अहं बहुविदपि बहूर्विन्दति प्राप्नोतीति बहुवित् विन्दतेः क्विप् । अत्यासक्तितः अतिकामनया आद्यादित्वात् तृतीयान्तात्तसिः अत्त्यासक्तित इत्यत्र 'अनचि च' इति तकारस्य द्वित्वम् । पक्षान्तरेऽत्र द्वित्वस्य स्वतास्सिद्धत्वात् । त्वां आनीय पञ्चवटीस्थलादिति शेषः । कामये अभिलषामि । उक्तं च रामायणे सीतां प्रति रावणेन—

**कामये त्वां विशालाक्षि बहुमन्यस्व मां प्रिये ।**
**बह्वीनामुत्तमस्त्रीणामाहृतानामितस्ततः ॥**
**सर्वासामेव भद्रं ते ममाग्रमहिषी भव** । इत्यादि ।

मयि मद्विषये त्वया दोषधीः दोषबुद्धिः मुधा वृथा न कर्तव्या न कार्या । मदन्तःपुरे बह्वीषु मानिनीषु सतीष्वपि त्वद्रूपलावण्यादिकमाकर्ण्य नितरां त्वय्यनुरक्तोऽहं महता श्रमेण त्वामानीय बहुधा प्रार्थये अथापि त्वं मम लोकोत्तरान् सुगुणानविगणय्य अन्यायेन मयि दोषानेव ब्रवीषि नैतदुचितम् । अहं त्वनुरागादिदमखिलं सहे । त्वमितःपरं वा मद्गुणैः परितुष्य मय्यनुरक्ता भवेति भावः ॥

**सीता प्रत्याह—**

खल! रे दुष्ट! वाक् एतादृशीत्यर्थः । कुतः कस्मात् सदा

निर्याति निस्सरति? त्वन्मुखेभ्य इति शेषः। तव इयं वागित्य-नुषङ्गः। हितापेता खलु हितात् अपेता गता "**अपेतापोढमुक्त-पतितापत्रस्तैरल्पशः**" इति पञ्चमीतत्पुरुषः। अहितकरीत्यर्थः। खल्वित्यनुनये। असकृदीदृशोक्तिकथनेन तव स्वस्ति न भवेत् अत इतःपरमेवं मा वदेति भावः॥

**प्रत्युक्तिगूढार्थस्तु—**

खल! वाक् कुतः सदा दकारसहिता निर्याति? दकारं मा वदेत्यर्थः। तर्हि तत्स्थाने को वर्णो वक्तव्य इति चेदाह हितेति। पेता पेन पकारेण इता कलिता तव इयं वाक् हिता खलु त्वदुक्तायां वाचि दकारं विरहय्य तत्स्थाने पकारं वदसि चेत् इयं दकारस्थानापन्नपकारा तव वाक् हिता स्यादिति फलितोर्थः॥

एवं च—

**मानिन्यः कति वा न सन्ति सततं मे पापवश्या गृहे**
**त्वामानीय तथाऽप्यहं बहुविपत्त्यासक्तितः कामये।**
**कर्तव्या न मुधा त्वया मयि ननु क्षोणीसुते पोषधीः॥**

इति वदेति फलितम्।

ननु क्षोणीसुते! मे गृहे पापवश्याः पापेन स्वदुष्कृतेन हेतुना वश्याः वशं गताः मदधीना इत्यर्थः। कति वा मानिन्यः परकीया इति यावत्। सततं न सन्ति? बह्व्यस्सन्त्येवेत्यर्थः। स्व-

यमननुरक्ता अपि बह्व्यः देवाङ्गनादयः बलवत्तरेण स्वपापकर्मणा मन्मन्दिरे बन्दीकृताः नित्यं मच्चित्तानुवर्तिन्यस्सन्त्येवेत्यर्थः। तथाऽपि—स्वमन्दिरे बन्दीकृतानां बह्वीनां परस्त्रीणां दुःखोत्पादनेन विपदं सम्पादितवानपीत्यर्थः। अहं बहुविपत्स्यासक्तितः बह्वीषु विपत्तिषु आसक्त्या विशेषतो विपदां लिप्सयेत्यर्थः। त्वां जगज्जननीं विष्णुपत्नीमित्यर्थः। कामये। मयि ईदृशि पापिनीत्यर्थः। त्वया मुधा पोषधीः परिपोषणबुद्धिः न कर्तव्या न कर्तुमुचिता। अयं परिपोषणीय इति त्वया मनसि नैव भावनीयम्, परं तु विनाशयितव्य इत्येवेति भावः। प्रतिदत्ताक्षरमिदम् ॥ १७॥

**मां दृष्ट्वा समितावलभ्य इति के धीरा न जानन्त्यहो सीते दाशरथिर्यथा न विकलद्द्योतः कदाऽप्यस्म्यहम्। मन्तव्या मयि नन्वतीवविरला आत्मप्रशंसोक्तयः वाक्ते दुष्टविलासिनीजनमनस्सन्तोषिणी स्यादियम् ॥ १८॥**

**मामिति** ॥ अहो सीते! के के वा धीराः धैर्यशालिनः शूरा इत्यर्थः। समितौ आजौ '**समित्साजिसमिद्युधः**' इत्यमरः। मां दृष्ट्वा अलभ्यः अगम्यः इति न जानन्ति? समरभुवि मद्दर्शनमात्रेणैव अयं योद्धुमशक्य इति सर्वेऽपि जानन्तीत्यर्थः। अत एवेति शेषः। अहं दाशरथिर्यथा राम इव यथाशब्दस्सादृश्ये। कदाऽपि कदाचिदपि विकलद्द्योतः हीनकान्तिः नास्मि।

विकलद्द्योत इत्यत्र 'अनचि च' इति दकारस्य द्वित्वम्। रामः अवीरतया अविरतं म्लानवदनः, अहं तु वीरतया सदा तेजोविशेषेण विभासमानोस्मीति भावः। एवमयमात्मानं प्रशंसनीति मा विजानीहीत्याह मन्तव्या इत्यादिना। मयि आत्मप्रशंसोक्तयः आत्मश्लाघनवाचः अतीवविरलाः अत्यल्पाः मन्तव्या ननु ज्ञातव्याः खलु। प्रायशः नास्त्येवात्मप्रशंसोक्तिर्मयि, यदि कदाचित् काचित् वाग्धोरण्या संपतेत् न सा बुद्धिपूर्विका। सहजशौर्यधैर्यादिसुगुणस्य मम कुतो वाऽऽत्मप्रशंसेति भावः॥

सीता प्रत्याह—

'रे' इत्यध्याहार्यम्। इयं 'मां दृष्ट्वा' इत्यादिः ते वाक् दुष्टविलासिनीजनमनस्संतोषिणी—दुष्टो दुश्शीलो यो विलासिनीजनः कामिनीजनः तस्य मनस्सन्तोषयतीति तथोक्ता स्यात् संभावनायां लिङ्। दुष्टाः कामिन्यस्तवेदं वचनमाकर्ण्य मनसि संतुष्येयुः न मादृश्यस्साध्व्य इत्यर्थः॥

प्रत्युक्तिगूढार्थस्तु—

दुष्टविलासिनीजनमनस्संतोषिणीत्यत्र—दुष्ट, विला, सिनी, जनमनस्संतोषिणी इति छेदः। दुष्टेति रावणसंबोधनम्। इयं 'मां दृष्ट्वा समितावलभ्यः' इत्यादिः ते वाक् विला विगतो लो लकारो यस्यास्सा लकाररहिता, सिनी सः सकारोस्या अस्तीति सिनी सकारसहिता, लकारस्थानापन्नसकारा सतीत्यर्थः। जनमनस्संतोषिणी

जनानां सज्जनानां मनः संतोषयतीति तथोक्ता स्यात् । विध्यर्थे लिङ् । लकारं विहाय तत्स्थाने मकारं वदसि यदि तदा तवोक्तिरियं जनहृदयानन्दकरी भवेदित्यर्थः ॥ एवं च—

**मां दृष्ट्वा समितावसभ्य इति के धीरा न जानन्त्यहो**
**सीते दाशरथिर्यथा न विकसद्द्योतः कदाऽप्यस्म्यहम् ॥**
**मन्तव्या मयि नन्वतीवविरसा आत्मप्रशंसोक्तयः ।**

इति वाच्यमिति फलितम् ।

समितौ सभायां '**सभासमितिसंसदः**' इत्यमरः । के धीराः प्राज्ञाः '**धीरो मनीषी ज्ञः प्राज्ञः**' इत्यमरः । सभायां साधुस्सभ्यः स न भवतीत्यसभ्यः '**सभाया यः**' इति यप्रत्ययः । सभानर्ह इति यावत् । इति न जानन्ति? दुर्वृत्ततया सभानर्ह इति सर्वेऽपि प्राज्ञा जानन्तीत्यर्थः । अत एवेति शेषः । अहं दाशरथिर्यथा श्रीराम इव कदाऽपि विकसद्द्योतः विकसन् विकासमधिगच्छन् द्योतः प्रकाशः यस्य स तथोक्तः अत्यन्तं प्रकाशमान इत्यर्थः । नास्मि । रामस्सर्वदा सर्वैश्श्लाघितस्तेजसा देदीप्यमानोस्ति अहं तु प्राज्ञैरसभ्य इति परिभूयमानः सदा खिन्न एवास्मीति भावः । अस्मिन् पक्षेऽपि विकसद्द्योत इत्यत्र पूर्ववत् '**अनचि च**' इति द्वित्वे '**झरो झरि सवर्णे**' इति एकस्य दस्य लोपे दकारद्वयमुभयत्र समानम् । मयि आत्मप्रशंसोक्तयः अतीवविरसाः विगतो रसो गुणो याभ्यस्ताः '**गुणे रागे द्रवे रसः**' इत्यमरः । नितरां गुणराहित्येन व्यर्था इत्यर्थः । इति मन्तव्याः त्वयेति शेषः ॥

इदं च प्रतिदत्ताक्षरम् ॥ १८॥

**सपक्षं मां चित्ते कलय ननु राकेन्दुवदने दृशा पश्य त्वं मां सपदि दृढकामं सदयया । मदीयं व्याहारं कुरु निखिलमप्यद्य सफलं जनस्याश्रव्यं ते वच इह सतो विप्रियमरे ॥ १९ ॥**

सपक्षमिति ॥ नन्वित्यामन्त्रणे । राकेन्दुवदने! राकेन्दुः पूर्णिमाचन्द्र इव वदनं मुखं यस्यास्तस्यास्संबोधनम् । '**पौर्णमासी तु पूर्णिमा । कलाहीने साऽनुमतिः पूर्णे राका निशाकरे**' इत्यमरः । मां सपक्षं समान एकः पक्षस्साध्योऽर्थो यस्य स सपक्षः तथाभूतं चित्ते कलय । मां तवानुकूलं जानीहीत्यर्थः । त्वं सपदि सद्यः '**सद्यस्सपदि तत्क्षणे**' इत्यमरः । कालविलम्बनं तु मासह्यमिति भावः । सदयया सकरुणया दृशा दृष्ट्या दृढकामं दृढो नितान्तः कामस्त्वद्विषयकाभिलाषो यस्य तं तथोक्तं '**तीव्रैकान्तनितान्तानि गाढबाढदृढानि च**' इत्यमरः । मां पश्य त्वयि दृढानुरागं मां प्रसन्नदृष्ट्या विलोकयेत्यर्थः । मदीयं मत्संबन्धिनं '**वृद्धाच्छः**' इति छप्रत्ययः । निखिलमपि पूर्वोक्तं सर्वमपीत्यर्थः । व्याहारं वचनं '**व्याहार उक्तिर्लपितं भाषितं वचनं वचः**' इत्यमरः । अद्य इदानीमेव एवशब्दो गम्यः न तु कालान्तर इत्यर्थः । सफलं सार्थकं कुरु । त्वयि प्रसन्नायां सर्वा अपि मत्प्रार्थनोक्तयस्सफलास्स्युरिति भावः ॥

सीता प्रत्याह—

अरे नीच! अश्रव्यं श्रोतुमनर्हं ते तव वचः वचनं इह जगत्यां मतो जनस्य सज्जनस्य विप्रियं अनभिमतम्। नवेदं वचनमाकर्ण्य सज्जना न संतुष्येयुरित्यर्थः ॥

प्रत्युक्तिगूढार्थस्तु—

अरे! ते वचः **"सपक्षं मां चित्ते"** इत्यादिकं जनस्य अश्रव्यं जनेन न श्रव्यम् **"कृत्यानां कर्तरि वा"** इति षष्ठी। इह—अस्मिंस्ते वचसि सतः सेत्याकारके अक्षरे सप्तम्यन्तात् तसिः लक्षणया तत्स्थान इत्यर्थः। वि वीत्याकारकमक्षरं प्रियं इष्टम्। जनस्येति शेषः। ततस्तथा वदेत्यर्थः ॥ एवं च—

**विपक्षं मां चित्ते कलय ननु राकेन्दुवदने**
**दृशा पश्य त्वं मां विपदि दृढकामं विदयया ॥**
**मदीयं व्याहारं कुरु निखिलमप्यद्य विफलम्।**

इति पर्यवसितम्।

ननु राकेन्दुवदने! मां चित्ते विपक्षं विरुद्धः पक्षस्साध्योऽर्थो यस्य तं अहितमिति यावत् कलय जानीहि। विपदि विपत्तौ विपद्धेतौ कार्ये इत्यर्थः। आयुर्घृतमितिवत् हेतुहेतुमतोरभेदः। दृढकामं दृढाभिलाषं औत्सुक्येन प्रवर्तमानमिति यावत्। मां विदयया विगता दया यस्यास्तया दयारहितयेत्यर्थः। दृशा पश्य। विपक्षं विपद्धेतुषु कार्येषु अत्यासक्तं च मां दयाप्रसन्नया दृष्ट्या

द्रष्टुमनुचितम् । अन्यथा तादृशस्य मम स्वकर्मोचितं फलं न संपद्येत अतस्ते निर्दयकटाक्षवीक्षणमेव ममोचितमित्यर्थः । मदीयं निखिलमपि व्याहारं त्वत्कामनादिविषयकं अद्य विफलं व्यर्थं कुरु । तव निर्दय-दृगवलोकने मदखिलोक्तिजालस्य वैफल्यं संपद्यत एवेति भावः ॥

इदं च प्रतिदत्ताक्षरम् । वृत्तं शिखरिणी । लक्षणं तूक्तम् ॥ १९॥

**नित्यं चोदयिताऽस्मि केवलहितांस्तत्तन्महा-कार्यतः भूयस्स्वोद्यमसाधितेष्टनिचयो नन्वस्म्य-हं भूसुते । मादृक्षो भुवनेऽस्ति को धुरि सतां वा-च्योस्मि नैजैर्गुणैः किं रे जल्पसि निर्विचारमुचि-ता वाक्के विचारान्विता ॥ २० ॥**

**नित्यमिति** ॥ ननु भूसुते! अहं नित्यं प्रत्यहं तत्तन्म-हाकार्यतः तेषुतेषु महत्सु कार्येषु, सर्वेषु मुख्यकार्येष्वित्यर्थः । सप्तम्यन्तात्तसिः । केवलहितान् अत्यन्तहितैषिणः सचिवानिति या-वत् । चोदयिता प्रेरयिता अस्मि । सन्ततमखिलेषु मुख्यराज्यका-र्येषु हितैषिणामेव सचिवानां नियोजनात् अहं निश्चिन्त एवा-स्मीति भावः । न चायमशक्ततया सचिवायत्तसिद्धिरिति शङ्क्यमि त्याह भूयस्स्वोद्यमेत्यादिना —अहमिति सर्वत्रानुषज्यते । भूय-स्स्वोद्यमसाधितेष्टनिचयः—भूयोभिर्बहुतरैः स्वैः स्वकीयैः उद्यमैः व्यवसायैः साधितास्संपादिताः इष्टानामभिलषितार्थानां निचयाः

निकराः येन स तथोक्तः अस्मि । महाशूरत्वात् स्वबाहुबलेनैव प्राप्तसकलमनोरथोस्मीति भावः । भुवने लोके मादृक्षः पूर्वोक्तगुणविशिष्ट इति यावत् । कः अस्ति? न कोपीत्यर्थः । नैजैः स्वकीयैः निजा एव नैजाः प्रज्ञादित्वात् स्वार्थेऽण् । गुणैश्शौर्यादिभिः हेतुना सतां विदुषां "**सन् सुधीः कोविदो बुधः**" इत्यमरः । धुरि अग्रे वाच्यः कीर्तनीयः अस्मि । सतामपि श्रव्यगुणोस्मीति भावः ॥

**सीता प्रत्याह—**

रे! नीच! निर्विचारं विचारशून्यं यथा तथा किं किमिति जल्पसि? निर्विचारं मा जल्पेत्यर्थः । विचारान्विता—इदं वाच्यमिदमवाच्यमित्याकारकेण विचारेण युक्ता ते, वाक् उचिता श्रोतुं योग्या स्यादिति शेषः । विचारपूर्वकं उच्यते चेत्तवोक्तिः श्रव्या स्यात् अन्यथा न श्रव्येत्यर्थः ॥

**प्रत्युक्तगूढार्थस्तु—**

रे! विचा चकाररहिता, रान्विता रेफयुक्ता चकारस्थानापन्नरेफेति यावत् । ते वाक् उचिता श्रोतुमर्हा । किं किमिति निर्विचारं—चकारस्थाने रेफो वक्तव्य इत्याकारकेण विचारेण शून्यं यथा तथा जल्पसि? एवं विचारशून्यं मा जल्प विचार्य चकारस्थाने रेफं वद तदा ते वाक् श्रोतुमुचिता स्यादित्यर्थः ॥ एवं च—

**नित्यं रोदयिताऽस्मि केवलहितांस्तत्तन्महाऽकार्यतः**
**भूयस्स्वोद्यमसाधितेष्टनिरयो नन्वस्म्यहं भूसुते।**
**मादृक्षो भुवनेऽस्ति को धुरि सतां वार्योस्मि नैजैर्गुणैः॥**

इति वदेति फलितम्।

ननु भूसुते! अहं तत्तन्महाऽकार्यतः—तैस्तैः परस्त्रीहरणसज्जनसंहरणादिभिः महद्भिः प्रबलैः दुर्वारैरिति यावत्। अकार्यतः अकार्यैः तृतीयान्तात्तसिः। केवलहितान् अतिहितैषिणः विभीषणादीनिति यावत्। नित्यं रोदयिता क्रन्दयिता अस्मि। अकार्यकरणादिह न केवलं हितैषिणां दुःखप्रदोस्मि आत्मनश्च नरकदुःखसंपादक इत्याह भूयस्स्वोद्यमेत्यादिना। भूयस्स्वोद्यमसाधितेष्टनिरयः—भूयांसः बहुतराः स्वैः स्वकीयैः उद्यमैर्व्यवसायैः साधितानि संपादितानि यानि इष्टानि परदारवशीकरणादीनि तेभ्यः ये निरयाः रौरवादयो नरकाः यस्य स तथोक्तः "**स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम्**" इत्यमरः। अस्मि मादृक्षः मद्वत् अकार्यकर्तेत्यर्थः। भुवने कोस्ति? न कोप्यस्तीत्यर्थः। नैजैस्स्वकीयैः गुणैः विपरीतलक्षणया दोषैरित्यर्थः। हेतुना धुरि अग्रे सतां सज्जनानां वार्यः निवारणीयः अस्मि। दुरात्मन्! अत्र मा विशेति सज्जनैः दूरमुत्सारणीयोऽस्मीत्यर्थः॥

इदं च प्रतिदत्ताक्षरम्॥२०॥

**उच्चैस्तोरणदामतो ज्वलदिदं यस्येक्षसे पत्तनं**

**श्रीमीनध्वज एष नन्विति जना जानन्ति यं त्वय्यसौ । उद्यद्भव्यमतिश्चिरात्प्रणयितां धत्तेसुमानोत्सुकः स्वच्छन्दं खल रे प्रजल्प विदितस्ते मोह एवात्र हि ॥२१॥**

पुरुषे वहुषु गुणेषु सम्भृतेष्वपि विशेषतः संपत् सौन्दर्यं सद्बुद्धिः मानिता चेतीमे चत्वारो गुणाः स्त्रीणां मनोरञ्जका इति विभावयन् रावणः ते च सर्वे स्वस्मिन् लोकोत्तरतया सन्तीत्याह—

**उच्चैरिति** ॥ सीते! इत्यध्याहार्यम् । मध्यमपुरुषप्रयोगात्त्वमित्याक्षिप्यते । उच्चैस्तोरणदामतः उच्चैस्तोरणानां उत्तुङ्गबहिर्द्वाराणां "**तोरणोऽस्त्री बहिर्द्वारम्**" इत्यमरः । दामतः मालाभिः तृतीयान्तात्तसिः । ज्वलत् चकासत् ज्वलनं च काञ्चनरत्नमयत्वाद्बोध्यम् । उक्तं च रामायणे लङ्कायास्तोरणानां काञ्चनरत्नमयत्वम्—

**तोरणैः काञ्चनैर्दिव्यैर्लतापङ्क्तिविचित्रितैः ।**
**ददर्श हनुमान् लङ्कां दिवि देवपुरीमिव ॥**
**स पाण्डुरोद्विद्धविमानमालिनीं महार्हजाम्बूनदजालतोरणाम् ।**
**यशस्विनीं रावणबाहुपालितां क्षपाचरैर्भीमबलैस्समावृताम् ॥**
**वीथीस्संप्रेक्षमाणश्च मणिकाञ्चनतोरणाः ।**

इत्यादि ।

इदं—त्वया अधिष्ठीयमानमित्यर्थः यस्य—ममेति यावत् । पत्तनं

नगरं पट्टणमिति पाठो वा लङ्कामित्यर्थः। ईक्षसे साक्षादवलोकयसे अनेन स्वस्य महाविभवत्वं द्योतितं भवति। एषः परिदृश्यमानो रावणः श्रीमीनध्वजो ननु श्रीयुक्तः रूपसम्पदन्वितः मीनध्वजः मन्मथ एव। नन्वित्यवधारणे। सुप्रसिद्धसौन्दर्यस्यापि मीन ध्वजस्य श्रीयुक्तत्वविशेषणं अनङ्गत्वशङ्कानिरासायेति ज्ञेयम्। इति जनाः यं मामिति यावत्। जानन्ति। साक्षान्मन्मथ एवेति जनैः ज्ञायमान इत्यर्थः। अनेन स्वस्य लोकोत्तरसौन्दर्यं प्रकाशितं भवति। उद्यद्भव्यमतिः—उद्यती विषयभेदेन नवनवमुन्मिषन्ती भव्या जगन्मङ्गलकरी मतिः धीः यस्य स तथोक्तः। सुमानोत्सुकः—सुमानेन लसच्चित्तसमुन्नत्या उत्सुक आसक्तः सुमाने उत्सुक इति वा। "प्रसितोत्सुकाभ्यां तृतीया च" इति उत्सुकशब्दयोगे तृतीयासप्तम्योर्विधानात्। असौ पूर्वोक्तगुणविशिष्टः रावण इति यावत्। त्वयि, चिरात् बहोः कालात् प्रणयितां प्रेमवत्त्वं धत्ते कलयते त्वय्यनुरक्तो वर्तत इत्यर्थः। महाविभवः अतिसुन्दरः कल्याणबुद्धिः मानवांश्चायं रावणः मानुष्यामपि त्वयि दैवयोगात् अनुरक्तोऽस्ति त्वदभिलषणीयगुणसमृद्धे एतादृशि अस्मिन् जने कथं त्वमद्यापि अननुरक्ताऽसि? शीघ्रं रज्यस्वेति भावः।

सीता प्रत्याह—

रे खल! स्वच्छन्दं स्वाशयानुसारेण प्रवृत्तं यथा तथा प्रजल्प प्रलप अनेन तव प्रजल्पनेन मम न काऽपि हानिरित्यर्थः। हि यस्मात् अत्र तव प्रजल्पने ते, मोहः अविवेकः हेतुत्वे-

नेनि शेषः । विदित एव दृढं विज्ञातः । रावणः अविवेकी अतः स्वच्छन्दं प्रलपतीत्येतत् विश्वजनीनमिति भावः ।

प्रत्युक्तिगूढार्थस्तु—

रे खल! स्वच्छन्दं प्रजल्प! तव प्रजल्पनेन न काऽपि हानिरित्यर्थः । हि यस्मात् ते, अत्र प्रजल्पन इति यावत् । मः मकारः ह एव हकारस्मन्नेव विदितः ज्ञातः । अस्मिंस्त्वत्प्रजल्पने यत्र यत्र मकारोस्ति तत्र सर्वत्रापि हकार एव मया ज्ञायते तथा चेत् तव प्रजल्पनेन श्रोतॄणां न मनस्तोदस्स्यादिति भावः ।

एवं च—

उच्चैस्तोरणदाहतो ज्वलदिदं यस्येक्षसे पत्तनं
श्रीहीनध्वज एष नन्विति जना जानन्ति यं त्वय्यसौ ।
उद्यद्धव्यहतिश्चिरात्प्रणयितां धत्तेऽसुहानोत्सुकः ।

इति फलितम् ।

यस्य ममेति यावत् । पत्तनं, उच्चैस्तोरणानां दाहतः दहनात् भाविन इत्यर्थः । पञ्चम्यास्तसिल् । ज्वलत् दीप्यमानं ईक्षसे "वर्तमानसामीप्ये वर्तमानवद्वा" इति वर्तमाननिर्देशः । एषः परिदृश्यमानो रावणः श्रीहीनध्वजो ननु—श्रिया कान्त्या हीनानि रहितानि ध्वजानि यस्य स तथोक्त एव । अनेकस्थानाधिष्ठितत्वेन ध्वजानीति बहुवचनम् । भाविना तोरणदाहेन अपजयेन वा निस्तेजस्कीभूत एवेत्यर्थः । इति जनाः यं जानन्ति ज्ञास्यन्ति एवं जनै-

ज्ञास्यमान इत्यर्थः। उद्यद्भव्यहतिः—उद्यती दैवदुर्विपाकादाविर्भवन्ती भव्यानां मङ्गलानां हतिर्नाशो यस्य स तथोक्तः असौ—सज्जनार्हिसनादिभिरकार्यैः हेतुना प्रादुर्भवदशुभ इत्यर्थः। रावण इति शेषः। असुहानोत्सुकस्सन्—असूनां प्राणानां हानं त्यागः जहातेर्भावे ल्युट्। तस्मिन् उत्सुकः उत्कण्ठितस्सन् त्वयि चिरात् प्रणयितां धत्ते त्वां चिरात् कामयत इत्यर्थः। उपनताशुभसूचनस्य अस्य त्वत्कामनं मरणसंपादकमेवेति भावः।

इदं च प्रतिदत्ताक्षरम् ॥ २१ ॥

**त्वदीयस्स प्रेयानहितगुण इत्येव विदितः स्वकीयश्रीहान्या जगदभिहता तस्य धिषणा। सहायात्मा मद्वन्न तु न च सदाहर्षकलितः तवैवं वाक्कस्मादिह भवति मोहं विसृज रे ॥ ५२ ॥**

**त्वदीय इति** ॥ सीते! इत्यध्याहार्यम्। त्वदीयः तावकः सः त्वया अभिनन्द्यमान इत्यर्थः। प्रेयान् अतिशयेन प्रियः **द्विवचनेत्यादिना ईयसुन् प्रत्ययः**। अहितगुणः अहिताः स्वस्य लोकस्य च अनिष्टाः गुणाः भीरुत्वादयः यस्य स तथोक्तः, न विद्यन्ते हिताः स्वस्य लोकस्य च हितकराः गुणाः शौर्यधैर्यादयः यस्मिन् स तथोक्तो वा। इति विदित एव प्रसिद्ध एव। तस्य रामस्य धिषणा बुद्धिः स्वकीयश्रीहान्या—स्वकीयायाः ज्येष्ठत्वेन स्वेन अवश्यं प्राप्तव्यायाः श्रियः राज्यल-

क्ष्म्याः हान्या त्यागेन हेतुना जगदभिहता जगता अभिहता तिरस्कृतेति यावत्। रामः प्राप्तमपि राज्यं त्यक्त्वा वने परिभ्रमति ईदृशो बुद्धिहीनः न कोप्यस्तीति सर्वैरपि तिरस्कृत इत्यर्थः। स इति शेषः। मद्वत् मया तुल्यं 'तेन तुल्यम्' इत्यादिना तृतीयान्ताद्वतिप्रत्ययः। सहायात्मा सहायः जगदनुकूलः आत्मा बुद्धिर्यस्य स तथोक्तः "आत्मा यत्नो धृतिर्बुद्धिः" इत्यमरः। न तु नैव तुरवधारणे। सदा हर्षकलितश्च संतोषभरितश्च न। उभयत्र भवतीति शेषः। अहं यथा लोकोपकारकमनाः सदा संतोषभरितश्चास्मि स नैव तथेत्यर्थः। स्वयं दुर्दशामापन्नः पुरुषः कथमन्यजनस्य साहाय्यमाकलयेत्? स्वयं वा कथं सदा संतोषभरितस्स्यादित्यधिक्षेपः। तादृशेन रामेण किं ते सुखं स्यात्? मां वृणीष्वेति भावः॥

**सीता प्रत्याह—**

रे! नीच! इह स्त्रिया मम समीप इत्यर्थः। तव वाक् उक्तिः एवं अनुचितरीत्या कस्मात् कुतः भवति निस्सरतीत्यर्थः। मम भर्तुः श्रीराघवस्य समीपे त्वमीदृशीः निन्दोक्तीरुक्त्वा न जीवेरिति भावः। मोहमविवेकं विसृज त्यज विपूर्वकात् सृजतेर्लोट्। इदं वचनमखिलं त्वदविवेकमूलकम्। अविवेकस्य विसर्जने त्वं नैवमनुचितं वदेरित्यर्थः॥

**प्रत्युक्तिगूढार्थस्तु—**

रे! तव वाक्, एवं—हकारवैशिष्ट्येन कस्मात् कुतः भवतीत्यध्याहारः। हं हकारं विसृज। इह—हकारस्थाने मः

मकारः भवति । वक्तव्यत्वेनेति शेषः । हकारसहितेयं तव वाक् श्रोतृभ्यो न रोचते यदि हकारं विसृज्य तत्स्थाने मकारं वदसि तदा रोचत इत्यर्थः ॥

एवं च—

**त्वदीयस्स प्रेयानमितगुण इत्येव विदितः**
**स्वकीयश्रीमान्या जगदभिमता तस्य धिषणा ॥**
**स मायात्मा मद्वन्न तु न च सदाऽमर्षकलितः**

इति वक्तव्यमिति फलितम् ।

त्वदीयः सः प्रेयान् स रामः अमितगुणः—अमिताः असङ्ख्याः गुणाः शौर्यधैर्यादयः यस्मिन् स तथोक्तः इति विदित एव प्रसिद्ध एव । श्रीरामः अनन्तकल्याणगुण इति को वा न जानातीत्यर्थः । तस्य रामस्य धिषणा, स्वकीयश्रीमान्या—स्वकीयया पत्न्येत्यर्थः । श्रिया लक्ष्म्या मान्या अभिनन्दनीया । जगदभिमता जगतः लोकस्य अभिमता इष्टा चेति समुच्चयोत्र गम्यः । स्वकुटुम्बेन लोकेन च अभिनन्द्यबुद्धिरीदृगतिदुर्लभ इति भावः । यद्वा—स्वकीयया स्वनिष्ठया श्रिया स्फुरणसम्पदा हेतुना मान्या । नवनवोन्मिषदनितरसाधारणजगदनुग्रहविषयकस्फूर्तिशालिनीत्यर्थः । अत एवेति शेषः । जगदभिमता सर्वजनसंमता । सः—अनन्तकल्याणगुणः जगदभिनन्दनीयबुद्धिश्चेत्यर्थः । मद्वत् मया तुल्यम् । मायात्मा—माया आत्मा स्वभावो यस्य स तथोक्तः

अमतो वस्तुनः मणिमन्त्रौषधादिभिः सद्रूपतापादनं, अन्यपदार्थानां अन्यथाकृतिर्वा मायेत्युच्यते। उक्तं च भावप्रकाशे—

**सद्रूपोद्भावनं माया स्वत एवासतः पुरा।**
**अथवाऽन्यपदार्थानामन्यथाकृतिरेव वा॥** इति॥

न तु नैव अहं यथा जगद्वञ्चकः स नैव तथा किं तु जगदनुग्राहक इत्यर्थः। मद्वदिति उभयत्रापि संबध्यते। सदा अमर्षकलितश्च अमर्षेण रोषेण कलित उपलक्षितश्च "**कोपक्रोधामर्षरोषप्रतिघाः**" इत्यमरः। न अहं यथा सर्वदा रोषोद्दीप्तोस्मि स न तथा, परं तु सर्वदा प्रसन्न एवेत्यर्थः। अतस्तस्य मम च कथं तुल्यता स्यादिति भावः॥

इदं च प्रतिदत्ताक्षरम्। शिखरिणी वृत्तम्। लक्षणं तूक्तम्॥२२

**गुणानां साहित्यं मयि तु नितरामेव भुवनत्रयेऽपि प्रख्यातो मम मतिविकासो घनतरः। जगत्याः प्राहुर्मां शशिमुखि महाभासमखिलाः असाराढ्या ते वाङ्निशिचर किमेवं भषसि रे॥२३॥**

पूर्वस्मिन् श्लोके श्रीरामं गुणहीनो हतमतिश्चेति विनिन्द्य अत्र तत्प्रतिद्वन्द्वितया आत्मानं गुणवान् महामतिश्चेत्यभिनन्दति—

गुणानामिति॥ शशिमुखि! हे चन्द्रवदने! अनेन संबो-

घनेन परदारमुखनिरीक्षणानिरपत्रपो रावणः सीतामुखं निश्शङ्क-मवलोकयन्नेवाहेत्ययमर्थो गम्यते । मयि तु तुशब्दः रामात् स्वस्मिन् भेदप्रकाशनाय । एवकारो भिन्नक्रमः । गुणानां शौर्यधैर्यादीनां साहित्यमेव सहितानां भावस्साहित्यम् । एवकारेण गुणानां परस्परं वियोगो व्यवच्छिद्यते । नितरामत्यन्तं अस्ति । अस्तीत्येतदप्रयुज्यमानमप्यत्र सिद्धम् "**अस्तिर्भवन्तीपरोऽप्रयुज्यमानोऽप्यस्ति**" इत्यनुशासनात् । घनतरः अत्यधिकः "**कठिनाधिकसान्द्रेषु वाद्यमध्यमनृत्तयोः । मुस्तामुद्गरमूर्तेषु त्रिषु मेघे पुमान् घनः**" । इति रत्नमाला । मम, मतिविकासः बुद्धिप्रकाशः भुवनत्रयेऽपि त्रिलोक्यामपि प्रख्यातः प्रथितः । सर्वेऽपि मामन्यादृशबुद्धिविकासं कथयन्तीत्यर्थः । अखिलास्समस्ताः मां एतादृशमित्यर्थः । जगत्याः लोकस्य "**जगती जगति छन्दोविशेषेऽपि क्षितावपि**" इत्यमरः । महाभासं महान्तं प्रकाशं प्राहुः कथयन्ति । प्रकाशके प्रकाशतादात्म्यव्यपदेशेन विशेषतः प्रकाशकत्वं व्यज्यते । जगदखिलमात्मनैव विभासत इति भावः ॥

**सीता प्रत्याह—**

रे निशिचर! राक्षस! एवं—अनुचितप्रकारेण किं किमर्थं भषसि जल्पसि? ते तव वाक्, असाराढ्या—सारेण स्थिरांशेन आढ्या युक्ता सा न भवतीत्यसाराढ्या निस्सारेति यावत् । अतो मा भषेत्यर्थः ॥

प्रत्युक्तिगूढार्थस्तु—

रे निशिचर! ते वाक्, अमा न विद्यते सस्सकारो यस्यास्सा अमा सकाररहिता राढ्या रेण रेफेण आढ्या पूर्णा रेफसहिता सकारस्थानापन्नरेफेत्यर्थः। तथाऽपीति शेषः। सकारस्थानापन्नरेफार्हामपीत्यर्थः। एवं सकारवैशिष्ट्येन किं किमर्थं भषसि? एवं मा भष सकारस्थाने रेफं प्रयुज्य वदेत्यर्थः॥

एवं च—

गुणानां राहित्यं मयि तु नितरामेव भुवन-
त्रयेऽपि प्रख्यातो मम मतिविकारो घनतरः।
जगत्याः प्राहुर्मां शशिमुखि महाभारमखिलाः॥

इति वदेति फलितम्।

शशिमुखि! मयि तु, गुणानां शौर्यादीनां राहित्यमेव रहितानां भावः राहित्यं अभाव इत्यर्थः। एवकारेण गुणानां सत्ता व्यवच्छिद्यते। नितरां अस्ति मय्येकोपि गुणो नास्तीत्यर्थः। घनतरः अत्यधिकः मम मतिविकारः बुद्धिदुष्परिणामः भुवनत्रयेऽपि प्रख्यातः। रावणोऽतिदुर्बुद्धिरिति सर्वेऽपि वदन्तीत्यर्थः। मां एतादृशामिति यावत्। जगत्याः भूमेः महाभारं महाभारभूतं प्राहुः। अहं केवलं भूभारोस्मीत्यर्थः। इदं च प्रतिदत्ताक्षरं चित्रम्॥२२

सद्यस्संभावनं स्यान्मम विगतभियस्सांयुगी-
नैस्सगीके सीते मां विद्धि नित्याभ्युदयमिह धरा-

**भार एव प्रियस्ते । प्रस्तावस्तस्य युक्तो न खलु सुविभुतोदारकीर्तेर्ममाग्रे मा जल्पेद्दग्वचो रे निगद सदभिधोद्धासमानं दुरात्मन् ॥ २४ ॥**

सद्य इति ॥ सीते! सांयुगीनैः—संयुगे रणे साधवस्सांयुगीनाः तैस्सह । प्रज्ञादित्वात् खञ् । सहशब्दयोगाभावेऽपि तदर्थयोगात् 'विनाऽपि तद्योगं तृतीया' इति तृतीया । समीके युद्धे विषये 'मृथमास्कन्दनं संख्यं समीकं सांपरायिकम्' इत्यमरः । विगतभियः विगता भीः भीतिः यस्मात्तस्य 'भीतिर्भीस्साध्वसं भयम्' इत्यमरः । धीरस्येत्यर्थः । मम, सद्यस्सपदि 'सद्यस्सपदि तत्क्षणे' इत्यमरः । संभावनं बहुमाननं संपूर्वकस्य भावयतेः वितर्कार्थकत्वेऽपि बहुमानार्थकत्वं च संपद्यते 'संभावितस्य चाकीर्तिर्मरणादतिरिच्यते' इत्यादिप्रयोगदर्शनात् । स्यात् अस्तेर्विधौ लिङ् । समरभुवि मत्प्रवेशमात्रेणैव शत्रवः पराजिताः धीरं मां बहुमानयन्तीत्यर्थः । इह—भुवि मां, नित्याभ्युदयं नित्यस्सन्ततः अभ्युदयश्शत्रुविजयादिश्रेयोलाभः यस्य तं तथोक्तं उत्तरोत्तराभ्युदयपरम्परमित्यर्थः । विद्धि जानीहि ते तव प्रियः पतिः रामः 'धवः प्रियः पतिर्भर्ता' इत्यमरः । धराभा एव भूभारभूत एव व्यर्थजन्मेत्यर्थः । तस्य तादृशस्य प्रस्तावः व्याहारः सुविभुतोदारकीर्तेः—विभोर्भावः विभुता शोभना च सा विभुता च सुविभुता तया था उदारा महती कीर्ति-

र्यस्य तस्य मम अग्रे न युक्तः खलु अनुचित एव । खल्विति निश्चये । रणधीरस्य संततास्युदयस्य महाप्रभुत्वसंपादितमहायशसश्च मम पुरः रणभीतित्वेन वनवासित्वेन प्रभुत्वकीर्त्यादिरहितत्वेन च मोघजन्मनः रामस्य वार्ताऽपि हासाय भवतीत्यर्थः ॥

सीता प्रत्याह—

रे दुरात्मन्! दुर्बुद्धे! ईदृक् ईदृशं असत्यमित्यर्थः । वचः वचनं मा जल्प मा प्रलप सदभिधोद्भासमानं सतः सत्यस्य अथवा विद्यमानस्य विषयस्येति शेषः । '**सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत्**' इत्यमरः । अभिधा अभिधानं भाषणमित्यर्थः । अभिपूर्वकात् दधातेः '**आतश्चोपसर्गे**' इत्यङ् स्त्रियां टाप् । यद्वा—सती प्रशस्ता सदर्थबोधिकेति यावत् । अभिधा शब्दशक्तिः तया उद्भासमानं प्रकाशमानं प्रमाजनकमित्यर्थः । वच इत्यनुषज्यते । निगद वद निपूर्वकात् गदतेर्लोट् । श्रीरामे असत्यां गुणहीनतां स्वस्मिन् गुणवत्तां च कुतो वदसि? श्रीरामे सत्यां गुणवत्तां स्वस्मिन् गुणहीनतां च वदेत्यर्थः॥

प्रत्युक्तिगूढार्थस्तु—

रे दुरात्मन्! वचः ईदृक् भकारयुक्तं सत् मा जल्प। तर्हि कीदृशं सत् वक्तव्यमिति चेदाह—अभि भः भकारः अस्यास्तीति भि, भि न भवतीत्यभि भकाररहितमित्यर्थः । धोद्भासमानं धेन धकारेण उद्भासमानं विशेषतश्शोभमानं धकारयुक्त-

मित्यर्थः । भकारस्थानापन्नधकारं सदिति यावत् । निगद । ईदृक् भकाररहितं वचः मा जल्प । अभि धोद्गासमानं अत एव सत् अभ्यर्हितं वचः निगद इति वा ॥

एवं च—

**सद्यस्संधावनं स्यान्मम विगतधियस्सांयुगीनैस्समीके ।**
**सीते मां विद्धि नित्याध्युदयमिह धराधार एव प्रियस्ते ॥**
**प्रस्तावस्तस्य युक्तो न खलु सुविधुतोदारकीर्तेर्ममाग्रे ।**

इति वदेति फलितम् ।

सीते! सांयुगीनैस्सह समीके सति भावलक्षणसप्तमी । विगतधियः विगता धीर्बुद्धिर्यस्मात्तस्य शत्रुघातात् इतिकर्तव्यताज्ञानरहितस्येत्यर्थः । मम सद्यः संधावनं सम्यक् धावनं पलायनं स्यात् । समरभयात् किमपि कर्तुमशक्तः पलायनमेव शरणं मन्य इत्यर्थः । मां एतादृशमिति यावत् । नित्याध्युदयं—नित्यस्संततः आधीनां मनोव्यथानां उदय उद्भवो यस्मिंस्तम् । '**पुंस्याधिर्मानसी व्यथा**' इत्यमरः । रणावमानात् सर्वदा खिद्यमानमित्यर्थः । विद्धि । ते प्रियः धराऽऽधार एव धरायाः लक्षणया धरास्थितजनानामित्यर्थः । साकल्यप्रतीतिः प्रयोजनम् । आधार एव शौर्यौदार्यादिसद्गुणपरिपूर्णतया सर्वेषामप्याश्रय इत्यर्थः । तस्य तादृशस्य प्रस्तावः सुविधुतोदारकीर्तेः—सुष्ठु विधुता त्यक्ता '**विधुतौ कम्पितत्यक्तौ**' इति रत्नमाला । उदारा महती कीर्तिर्येन तस्य

सत्कीर्तिमलक्षीकृत्य केवलमपकीर्तिमाश्रितवत इत्यर्थः । मम अग्रे न युक्तः खलु । तादृशस्य महापुरुषस्य गुणसंकीर्तनं ईदृशस्य दुरात्मनो ममाग्रे कर्तुमनुचितमेवेत्यर्थः । तद्गुणकीर्तनं श्रोतुमप्यहमनर्ह इति भावः ॥

इदं च प्रतिदत्ताक्षरम् ॥ २४ ॥

**लोके शस्तविवेक इत्यभिहितः को मत्परो वर्तते नित्यं मद्वदधीशसंनुतगुणः कस्तावदस्तीतरः॥**
**भूजाते शरणागतस्य सुलभः को मत्समो विद्यते**
**शश्वज्जल्पसि यत्त्वमेवमिह रे कुत्रापि शं मागमः॥**

लोक इति ॥ भूजाते! लोके जगति शस्तविवेकः शस्तः प्रशस्तः विवेकः युक्तायुक्तज्ञानं यस्य स तथोक्तः शस्तः क्षेमंकर इति वा "शस्तं क्षेमे प्रशस्ते च" इति कोशात् । इति अभिहितः कीर्तितः अभिपूर्वकात् दधातेः कर्मणि क्तः । जनैरिति शेषः । मत् मत्तः परः अन्यः कः वर्तते? जगत्यहमिव महाविवेकशाली कोपि न वर्तत इत्यर्थः । मद्वत् मया तुल्यं अहमिवेत्यर्थः । नित्यं अनवरतं अधीशसंनुतगुणः—अधीशैः राजाधिराजैः इन्द्रादिभिर्दिशामधिनाथैर्वा संनुताः सम्यक् स्तुता गुणाः शौर्यधैर्यादयः यस्य स तथोक्तः । इतरः मदन्यः कस्तावत् तावदिति वाक्यालङ्कारे । अस्ति? ईदृशः गुणशाली न को-

ष्यस्तीत्यर्थः । शरणागतस्य शरणं रक्षितारमागतः प्राप्तः शरणागतः शरणाय रक्षणाय रक्षणं प्राप्तुमित्यर्थः । आगत इति वा "**शरणं स्याद्रक्षितरि रक्षणे मन्दिरे वधे**" इति रत्नमाला । तस्य सुलभः सुखेन लब्धुं शक्यः '**ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल्**' मत्समः को विद्यते? न कोपीत्यर्थः । अनेन अनेकरक्षस्संहारात् सहोदरीमानभङ्गाच्च कुपितमपि मां यदि तव पतिः शरणं यास्यति तस्याप्यहं प्रसन्नस्स्यामिति रावणस्याशयो गम्यते ।

**सीता प्रत्याह—**

रे नीच! त्वं यत् यस्मात् शश्वत् पुनःपुनः "**मुहुः पुनःपुनश्शश्वत्**" इत्यमरः । एवं—अनुचितप्रकारेण जल्पसि तदित्यध्याहार्यम् । तत् तस्मात् इह—भूमौ कुत्रापि यस्मिन् कस्मिंश्चिद्विषयेऽपि शं सुखं मागमः मा प्राप्नुहि । सर्वत्रापि दुःखभाजनं भवेत्यर्थः । ईदृशस्य पापिनस्तव दुःखमेवोचितमिति भावः । "**माङि लुङि**" इति गमेर्लुङ्, पुषादित्वात् च्लेरङादेशः, '**न माङ्योगे**' इत्यडागमप्रतिषेधः ॥

**प्रत्युक्तिगूढार्थस्तु—**

रे! त्वं शश्वत् प्रतिवाक्यमित्यर्थः । एवं—उक्तप्रकारेण यत्—वचनं जल्पसि इह—अस्मिन् वचने कुत्रापि यस्मिन् कस्मिंश्चिद्वाक्येऽपि शं शवर्णं मागमः परित्यजेत्यर्थः । शवर्णं परित्यज्य अन्यत्सर्वं वद तत् श्रोतॄणामभिमतमिति भावः ॥

एवं च—

लोकेऽस्तविवेक इत्यभिहितः को मत्परो वर्तते
नित्यं मद्वदधीसंनुतगुणः कस्तावदस्तीतरः ।
भूजाते रणागतस्य सुलभः को मत्समो विद्यते ॥

इति वदेत्यर्थः ॥

भूजाते! लोके अस्तविवेकः अस्तः नुन्नः त्यक्त इति यावत् । विवेको येन स तथोक्तः **"नुत्तनुन्नास्तनिष्ठ्यूतविद्धक्षिप्तेरितास्समाः"** इत्यमरः । इति अभिहितः मत् परः को वर्तते? अहमिव अविवेकी न कोपि वर्तत इत्यर्थः । मद्वत् नित्यं अधीसंनुतगुणः न विद्यते धीः येषां ते अधियः बुद्धिहीनाः तैस्संनुता गुणा यस्य स तथोक्तः गुणहीनं मां बुद्धिहीनाः केवलं स्तुवन्ति बुद्धिमन्तस्तु न स्तुवन्तीति भावः । मदन्यः कस्तावदस्ति? न कोप्यस्तीत्यर्थः । रणागतस्य रणं प्रत्यागतस्य योद्धुमिति शेषः । सुलभः सुखेन लब्धुं शक्यः योद्धुरनायासेनैव लभ्य इत्यर्थः । मत्समः को विद्यते? ईदृशः शौर्यहीनश्च न कोपि विद्यत इत्यर्थः ॥

च्यावितात्क्षरमिदं चित्रम् ॥ २९ ॥

**लङ्काप्रापणतस्तवाहह सदालापस्य योग्योस्म्यहं धत्तां ते लपनश्रिया ननु सदालोकं भमान्तःपुरम् । दृष्ट्वाऽऽनन्द महीसुते विलसनं संत्य-**

**त्कलोभस्य मे नो स्यादेवमरे तव प्रलपितं मन्दाक्षलेशो यदि ॥ २६ ॥**

लङ्केति ॥ महीसुते! तव त्वत्कर्मकात् लङ्काप्रापणतः लङ्कायाः ममैतन्नगर्याः प्रापणत आनयनात् पञ्चम्यास्तसिल् । हेतौ पञ्चमी । सदा तव त्वत्कर्तृकस्य तवेत्युभयत्रान्वयः आलापस्य, यद्वा——सदालापस्य सन् सरसः य आलापः आभाषणं "**स्यादाभाषणमालापः**" इत्यमरः । तस्य अहं योग्यः पात्रं अस्मि । अहहेति हर्षे "**अहहेत्यद्भुते खेदे परिक्लेशप्रहर्षयोः । संबोधनेऽपि**..........." इति मेदिनी । दुर्गमेयं मम नगरी, न कोपि त्वदीयो जनोत्र समागमिष्यति, त्वमनुरक्ता मदन्तःपुरमधिष्ठाय निश्शङ्कं मया सह संभाषस्वेत्यर्थः । उक्तं च रामायणे सीतां प्रति रावणेन—

**देवि नेह भयं कार्यं मयि विश्वसिहि प्रिये ।**
**प्रणयस्व च तत्त्वेन मैवं भूश्शोकलालसा ॥**

इत्यादि । ते तव लपनश्रिया मुखकान्त्या '**आननं लपनं मुखम्**' इत्यमरः । मम अन्तःपुरं अवरोधनं "**स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम्**" इत्यमरः । सदालोकं सन् प्रशस्तः अनितरसाधारण इत्यर्थः । य आलोको द्योतः तं "**आलोकौ दर्शनोद्द्योतौ**" इत्यमरः । धत्तां दधातु आत्मनेपदिनो दधातेर्लोट् । अनेन सीतायाः पूर्णचन्द्रमुखत्वं व्यज्यते । त्वं मां वृत्वा

तवेन्दुहासिना सुन्दरवदनेन मदन्तःपुरं प्रकाशयन्ती तत्रत्यानां सर्वासामपीश्वरी भवेत्यर्थः। उक्तं च रामायणे सीतां प्रति रावणेन—

अन्तःपुरनिवासिन्यः स्त्रियस्सर्वगुणान्विताः।
यावन्त्यो मम सर्वासामैश्वर्यं कुरु जानकि॥
मम ह्यसितकेशान्ते त्रैलोक्यप्रवराः स्त्रियः।
तास्त्वां परिचरिष्यन्ति श्रियमप्सरसो यथा॥ इति॥

संत्यक्तलोभस्य लोभरहितस्य उदारस्येति यावत्। मे विलसनं विलासं वस्त्राभरणस्रक्चन्दननृत्तगीताद्युपभोगमित्यर्थः। दृष्ट्वा साक्षादवलोक्य आनन्द मोदस्व। अत्र किं बहुना? उदारं महाविभवं च मां वृत्त्वा मदन्तःपुरमनुशासती विविधापूर्वविषयविलासाननुभूय संतुष्टा भवेत्यर्थः। उक्तश्चायमेवार्थः रामायणे सीतां प्रति रावणेन—

विचित्राणि च माल्यानि चन्दनान्यगुरूणि च।
विविधानि च वासांसि दिव्यान्याभरणानि च॥
महार्हाणि च पानानि शयनान्यासनानि च।
गीतं नृत्तं च वाद्यं च लभ मां प्राप्य मैथिलि॥
इति॥

सीता प्रत्याह—

अरे! नीच! मन्दाक्षलेशः मन्दाक्षस्य लज्जायाः "मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा" इत्यमरः। तव तवेत्युभयत्रान्वयः यदि अस्ति चेत् तव प्रलपितं प्रलपनं प्रपूर्वकात् लपतेर्भावे क्तः। एवं अनेन प्रकारेण नो स्यात् न भवेत् य-

दीषदपि लज्जाशीलो भवेस्तदैवं न वदेः निर्लज्जत्वादेव परस्त्रिया अग्रे एवं निश्शङ्कं प्रलपसीत्यर्थः। अतस्ते प्रलपितमश्राव्यमिति भावः।

प्रत्युक्तिगूढार्थस्तु—

अरे! मन्दाक्ष मन्दमल्पं अपटु वा अक्षि ज्ञानरूपं चक्षुः यस्य तस्य संबुद्धिः ज्ञानविकलेत्यर्थः। "बहुव्रीहौ सक्थ्यक्ष्णोस्स्वाङ्गात् षच्" इति समासान्तष्षच्। तवेत्यस्य अत्राप्यन्वयः। तव वचसीति शेषः। ले लकारस्थाने शः शकारः यदि भवति चेत् तदा तव प्रलपितं एवं उक्तप्रकारेण अनौचित्यप्रतिपादकतयेति यावत्। नो स्यात् किं तु औचित्यप्रतिपादकमेव स्यादित्यर्थः॥

एवं च—

**शङ्काप्रापणतस्तवाहह सदा शापस्य योग्योऽस्म्यहं।**
**धत्तां ते शपनश्रिया ननु सदा शोकं ममान्तःपुरम्॥**
**दृष्ट्वाऽऽनन्द महीसुते विशसनं संत्यक्तशोभस्य मे।**

इति फलितम्॥

महीसुते! सदा सर्वदा प्रतिक्षणमित्यर्थः। तव शङ्काप्रापणतः शङ्कायाः अत्रानीताया मम दुरात्माऽयं किं वा करिष्यतीत्यनिष्टागमोत्प्रेक्षायाः प्रापणतः आकलनात् तव अत्रापि पक्षे तवेत्यस्य उभयत्रान्वयः शापस्य अहं योग्योस्मि अनवरतशङ्कोत्पादनात् बिभ्यत्या त्वया मे शापस्य दानमुचितमिति

भावः । अहहेति खेदे इदमतिखेदावहमित्यर्थः । ते तव शपनश्रिया शपनस्य शापस्य श्रिया संपदा महिम्नेति यावत् । मम अन्तःपुरं लक्षणया तत्स्थो जन इत्यर्थः । साकल्यप्रतीतिः प्रयोजनम् । सदा आजीवितकालमित्यर्थः । शोकं दुःखं धत्तां दधातु । सर्वान्तःपुरशोकस्य निमित्तकथनपूर्वकं पर्यवसितमाह दृष्ट्वेत्यादिना—संत्यक्तशोभस्य आसन्नमरणतया निस्तेजस्कस्येत्यर्थः । मे विशसनं हननं विपूर्वकात् शसतेर्भावे ल्युट् । रामकर्तृकमिति यावत् । "**निर्वापणं विशसनं मारणं प्रतिघातनम्**" इत्यमरः । दृष्ट्वा साक्षादवलोक्य ज्ञात्वेति वा दृशेर्ज्ञानसामान्यार्थकत्वात् । आनन्द अयं दुष्टो रावणो हत इति संतुष्टा भवेत्यर्थः ॥

प्रतिदत्ताक्षरमिदं चित्रम् ॥ २६ ॥

**दीव्यत्तेजोविलासैर्नरपतिशलभो भाव्यते यस्त्वदीया राजत्तारुण्यलीला विशसितमनसा शम्यते येन सीते ॥ ज्ञातो यस्य श्रमो वागविषय इति तं राघवं कस्स्तुवीयात् पापिन् किं वा वद त्वं तव वचनमिदं वेद्मयशङ्कावहं हि ॥ २७ ॥**

**दीव्यदिति** ॥ हे सीते! यः रामः दीव्यत्तेजोविलासैः दीव्यन् चकासत् तेजसः प्रतापस्य विलासो विभ्रमो येषां तैस्तथोक्तैः "**तेजो बले प्रतापेऽग्नौ**" इति रत्नमाला । नरपतिशलभः नरपतिश्शलभ इव उपमितं व्याघ्रादिभिरिति समासः शलभः पतङ्गः "**समौ पतङ्गशलभौ**" इत्यमरः । शलभवत् अ-

गणनीय इत्यर्थः । भाव्यते ज्ञायते महाप्रतापशालिभिरयमत्यल्पो नरपतिरिति परिभाव्यमान इत्यर्थः । त्वदीया तव संबन्धिनी राजत्तारुण्यलीला राजन्ती तारुण्यस्य यौवनस्य लीला विलासः विशसितमनसा विशसितं वनवासादिक्लेशेन हिंसितं मनो यस्य तेन हतचित्तेन उत्साहरहितेनेति यावत् । येन रामेण शम्यते शाम्यतेः कर्मणि लट् । अनुपभोगेन व्यर्थीक्रियत इत्यर्थः । यस्य रामस्य श्रमः वनवासक्लेशः वागविषयः वाचामगोचरः वक्तुमशक्य इत्यर्थः । इति ज्ञातः विदितः जनैरिति शेषः । तं तादृशं राघवं रामं कः स्तुवीयात् स्तुयात् 'तुरुस्तुशम्यमः' इत्यादिना हलादेस्सार्वधातुकस्य तिङो वैकल्पिक ईडागमः । ईदृशं न कोपि स्तौतीत्यर्थः । स्वयं तु सर्वैस्स्तुत इति भावः ॥

**सीता प्रत्याह—**

पापिन्! त्वं किं वा किमपि वद ते यद्यद्रोचते तत्सर्वमपि वदेत्यर्थः । हि यस्मात् तव इदं वचनं अशङ्काऽऽवहं शङ्काऽऽवहं भयोत्पादकं न भवतीत्यशङ्काऽऽवहं "**शङ्का त्रासवितर्कयोः**" इति रत्नमाला । वेद्मि जानामि । निखिलभयनिवारकं भगवन्तं श्रीदाशरथिमेव सर्वदा हृदि परिचिन्तयन्त्या मम त्वद्वचनानि न किमपि कुर्युरिति भावः ॥

**प्रत्युक्तिगूढार्थस्तु—**

पापिन्! त्वं किं वा वद । हि यस्मात् तव इदं वचनं अशं न विद्यते शश्शकारो यस्मिंस्तत् अशं शकाररहितं का-

वहं आ समन्तात् प्रतिवाक्यमित्यर्थः वहति प्राप्नोतीत्यावहं कस्य ककारस्य • आवहं ककारयुक्तं शकारस्थानापन्नककारमित्यर्थः। वेद्मि । तथा शकारस्थाने ककारोक्तौ स्वच्छन्दप्रवृत्तमपि तवेदं वचनं मम मनस्तोदकरं न स्यात् इत्यर्थः ॥

एवं च—

**दीव्यत्तेजोविलासैर्नरपतिकलभो भाव्यते यस्त्वदीया**
**राजत्तारुण्यलीला विकसितमनसा कम्यते येन सीते ॥**
**ज्ञातो यस्य क्रमो वागविषय इति तं राघवं कस्स्तुवीयात्॥**

इति वेद्मीति फलितम् ।

हे सीते! यः दीव्यत्तेजोविलासैः पूर्ववदर्थः। नरपतिकलभः नरपतिः कलभ इव नरपतिश्रेष्ठ इत्यर्थः। "**स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः। सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः**" इत्यत्र आद्यशब्दस्य ग्रहणात् कलभशब्दस्यापि संग्रहः "**पञ्चवर्षो गजो बालः पोतस्तु दशवार्षिकः। विक्को विंशतिवर्षस्तु कलभस्त्रिंशदब्दकः**" इति कलभशब्दस्य विशेषपरत्वेन श्रीरामे नवयौवनश्रीर्व्यज्यते। महातेजश्शालिनस्सर्वेऽपि श्रीरामं राजपुङ्गवं भावयन्तीत्यर्थः। त्वदीया राजत्तारुण्यलीला विकसितमनसा विकसितं अनुरागोल्लसितं मनः यस्य तेन तथोक्तेन वनमधिवसताऽपि सर्वदा त्वय्यनुरज्यमानेनेत्यर्थः। येन कम्यते काम्यते "**आयादय आर्धधातुके वा**" इति णिङो वैकल्पिकत्वेन प्रकृते तदभावः। यस्य क्रमः शौर्यौदार्यादिप्रकारः वागविषयः वाचामगोचरः अ-

निर्वचनीय इत्यर्थः। इति ज्ञातः तं—महाप्रतापशालिभिरपि राजेन्द्र इति श्लाघ्यमानं परमरसिकं अनिर्वचनीयशौर्यौदार्यादिप्रकारं च तव वल्लभमित्यर्थः। राघवं श्रीरामचन्द्रं कः स्तुवीयात् स्तोतुं शक्नुयात्? न कोपि स्तोतुं शक्नोतीत्यर्थः। शकि लिङ्चेति लिङ्॥ इदं च प्रतिदत्ताक्षरम्॥ २७॥

**क्वायं पुण्यजनो रणाङ्गणलसद्वीरद्विषद्दाहकः**
**तन्वङ्गि क्व पराक्रमेण रहितो रामो घनांहश्श्रितः॥**
**सत्येवं हसितात्मकीर्तिविसरस्तुल्यः कथं मे भवेत्**
**रे रात्रिंचर वागियं तव मता स्याद्भ्रष्ट हासास्पदम्॥ २८॥**

क्वायमिति॥ हे तन्वङ्गि कृशाङ्गि! रणाङ्गणलसद्वीरद्विषद्दाहकः रणाङ्गणे युद्धभूमौ लसन्तः पराक्रमेण राजन्तः ये वीरा द्विषन्तश्शत्रवः तेषां दाहकः विनाशक इति यावत्। अयं परिदृश्यमानः पुण्यजनः पुण्यश्चासौ जनश्चेति कर्मधारयः पुण्यशब्दोत्र द्रव्यपरत्वात् विशेष्यनिघ्नः "अथ त्रिषु द्रव्ये पापपुण्यसुखादि च" इति कोशात्। पुण्यवानहमित्यर्थः। क्व कुत्र? पराक्रमेण रहितः हीनः घनांहश्श्रितः घनानि महान्ति अंहांसि पापानि "अंहो दुरितमाख्रियाम्" इत्यमरः। श्रितः ताटकादिसंहार शूर्पणखामानभङ्गादिमहापाप इत्यर्थः। रामः क्व? तस्य मम च आनुरूप्यं नास्तीत्यर्थः। एवं सति तस्य मम चानुरूप्ये असत्यपी-

त्यर्थः । हसितात्मकीर्तिविसरः हसितः जनैरपहसितः आत्मनः स्वस्य कीर्तिविसरः यशोनिवहो यस्य स तथोक्तः अपहासास्पदशौर्यौदार्यादिरित्यर्थः । स इति शेषः । स पूर्वोक्तो रामः मे सुश्लाघ्यशौर्यादार्यादिकस्येत्यर्थः । तुल्यः सदृशः कथं भवेत्? स मम केनचिदपि गुणेन न तुल्य एवेति भावः । उक्तं चैवमेव रामायणे सीतां प्रति रावणेन—

न रामस्तपसा देवि न बलेन न विक्रमैः ।
न धनेन मया तुल्यः तेजसा यशसाऽपि वा ॥ इति ॥

सीता प्रत्याह—

रे! भ्रष्ट! विवेकच्युत! रात्रिंचर राक्षस! रात्रौ चरतीति रात्रिंचरः चरेष्टः "रात्रेः कृति विभाषा" इति मुम्, तव मता अभिमता इयं क्रायं पुण्यजन इत्यादिः वाक् हासास्पदं हासस्य "हासो हास्यं च" इत्यमरः । आस्पदं स्थानं "आस्पदं प्रतिष्ठायाम्" इति निपातः स्यात् । महामहिमानमपि श्रीराघवमेवं निन्दतस्तव वचनमाकर्ण्य सर्वेऽपि त्वामपहसन्तीत्यर्थः ॥

प्रत्युक्तिगूढार्थस्तु—

रे रात्रिंचर! इयं क्रायमित्यादिः तव वाक् भ्रष्टहा भ्रष्टः च्युतः हः हकारः यस्यास्सा हकारशून्या सास्पदं सस्य सकारस्य आस्पदं सकारयुक्ता हकारस्थानापन्नसकारा सतीत्यर्थः । मता श्रोतॄणां संमता स्यात् भ्रष्टहा सास्पदं तवेयं वाक् मतेति पूर्वविशेषणत्वेन अन्वयो वा ॥

एवं च—

**क्वायं पुण्यजनो रणाङ्गणलसद्वीरद्विषद्दासकः**

**तन्वङ्गि क्व पराक्रमेण रसितो रामो घनांसश्श्रितः ॥**

**सत्येवं स सितात्मकीर्तिविसरस्तुल्यः कथं मे भवेत् ॥**

इति फलितम्

तन्वङ्गि! रणाङ्गणलसद्वीरद्विषद्दासकः अल्पो दासो दासकः अल्पार्थे कः। रणाङ्गणे लसन्तः वीराः ये द्विषन्तः तेषां दासकः दुर्बलतया तद्वश इत्यर्थः। अयं तव संनिकृष्टः पुण्य जनः राक्षसः पुण्यश्चासौ जनश्चेति विग्रहे विरुद्धलक्षणया पुण्यरहित इत्यर्थः। "**अथ पुण्यजनो यक्षे राक्षसे सज्जनेऽपि च**" इति कोशः। क्व? रसितः रसो गुणोस्य संजातः रसितः तारकादित्वात् इतच्। पराक्रमेण रसितः पराक्रमगुणविशिष्ट इत्यर्थः। धान्येन धनवानित्यादाविव अभेदे तृतीया। तृतीयेति योगविभागात्समासः। रलयोरभेदात् लसितः प्रकाशमान इति वा। घनांसश्श्रितः घनौ महाराजोचितलक्षणानुसारेण उत्तुङ्गौ अंसौ स्कन्धौ श्रितः वृषस्कन्ध इति यावत्। घनांसश्श्रित इत्यत्र शकारस्य अनचि चेति द्वित्वम्। रामः क्व! तस्य मम च आनुरूप्यं नास्त्येवेत्यर्थः। एवं सति सितात्मकीर्तिविसरः सितः विशदः आत्मकीर्तिविसरः यस्य स तथोक्तः सः पूर्वोक्तो रामः अत्र पक्षे स इत्यस्य प्रयुक्तत्वात् न शेषः मे दुष्कीर्तिभाज इत्यर्थः।

कथं तुल्यः भवेत्? पापिनो मम प्रस्तावे महानुभावस्स न कीर्तनीय एवेति भावः। इदं च प्रतिदत्ताक्षरम् ॥ २८॥

**रामं को नाभिधत्ते ध्रुवमयमदयोपेत इत्यत्र लोके कस्तावत्तस्य मत्या न भणति कुदशाग्रोपमानं गुणज्ञः॥ शीलं तस्मिन् महीजे किमपि सदमलं वर्तते वा भण त्वं रे दुर्बुद्धे किमेवं भषसि बहुविदा गीर्मया ते हि बुद्धा॥ २९॥**

**राममिति**॥ महीजे सीते! अत्र लोके रामं अयं रामः अदयोपेतः दयया उपेतः दयालुः स न भवतीति तथोक्तः। ध्रुवमिति निश्चये। इति कः नाभिधत्ते? अभिपूर्वकादात्मनेपदिनो दधातेर्लट्। रामः केवलनिर्घृण एवेति सर्वेऽप्यभिदधत इत्यर्थः। कः गुणज्ञः गुणवित् तावदिति वाक्यालङ्कारे तस्य रामस्य मत्या हेतुना विचारशून्ययेति भावः। हेतौ तृतीया। कुदशाग्रोपमानं कुत्सिता दशा येषां तेषां अग्राः अग्र्याः "**पराार्ध्याग्रप्राग्रहरप्राग्र्याग्र्याग्रीयमग्रियम्**" इत्यमरः। प्रथमपरिगणितत्वेन दुर्दशामापन्ना इत्यर्थः। तैः उपमानं न भणति? रामः स्वबुद्ध्यैव केवलदुर्दशामापन्न इति सर्वेऽपि भणन्तीत्यर्थः। प्राप्तविभवस्यापि तस्य दुर्दशा स्वमन्दबुद्धिमूलिकैवेति भावः। तस्मिन् निर्दये दुर्देशे च रामे सत् सत्यं अदाम्भिकमित्यर्थः। "सत्ये साधौ

विद्यमाने प्रशस्तेऽभ्यर्हिते च सत्" इत्यमरः। अमलं निर्दोषं शीलं वृत्तं "शीलं वृत्तस्वभावयोः" इति रत्नमाला। किमपि यत्किंचिदपि वर्तते वा? अव्ययानामनेकार्थत्वेन वेति प्रश्ने। प्रयत्नेन मार्गितमपि तस्मिन् एकं वा सुशीलं नास्तीत्यर्थः। त्वं भण आस्तामितरेषां भणनं तत्सहचरी त्वं सर्वं जानासि अतस्त्वमेव सत्यं भणेति भावः॥

सीता प्रत्याह—

रे दुर्बुद्धे! एवं बहुप्रकारं किं किमर्थं भषसि? बहुविदा बहुज्ञया मया ते तव गीः वाक् बुद्धा हि ज्ञातैव। दुरात्मनोस्य वागनारतं आत्मप्रशंसायां मत्प्राणवल्लभनिन्दायां च स्वच्छन्दं प्रवृत्तेत्यहं जानाम्येवेति भावः। अतः अलं एवं बहुधा मा भषेत्यर्थः॥

प्रत्युक्तिगूढार्थस्तु—

रे दुर्बुद्धे! किं किमर्थं एवं अदयोपेत इत्याद्यानुपूर्वीवत्तया बहु नितान्तं असकृदित्यर्थः। भषसि? मा भषेत्यर्थः। हि यस्मात् ते गीः इयं वाक् मया विदा विगतो दो दवर्णो यस्यास्सा दवर्णरहिता बुद्धा एतस्यां गिरि दवर्णप्रयोगो नैव युक्त इत्यहं जानामीत्यर्थः। अतः अदयोपेत इत्यादौ दवर्णं मा वदेति भावः॥

एवं च—

रामं को नाभिधत्ते ध्रुवमयमयोपेत इत्यत्र लोके
कस्तावत्तस्य मत्या न भणति कुशाग्रोपमानं गुणज्ञः॥

**शीलं तस्मिन् महीजे किमपि समलं वर्तते वा भण त्वम् ॥**

इति फलितम् ॥

**महीजे!** अत्र लोके रामं अयं रामः अयोपेतः अयै-श्शुभावहैर्विधिभिः उपेतः "**अयश्शुभावहो विधिः**" इत्यमरः। शुभोद्योगसंपन्न इत्यर्थः । इति कः नाभिधत्ते? सर्वेऽप्यभिदधत इत्यर्थः । कः गुणज्ञः गुणविभावकः तस्य रामस्य मत्याः बुद्धेः कुशाग्रोपमानं कुशस्य यदग्रं अन्तः तस्य उपमानं सादृश्यम्। "**अग्रं पुरस्तादुपरि परिमाणे फलस्य च । आलम्बने समूहे च प्रान्ते च स्यान्नपुंसकम् ॥ अधिके च प्रधाने च प्रथमे चाभिधेयवत्**" इति मेदिनी । न भणति? तस्य रामस्य बुद्धिः कुशाग्रवत् अतिसूक्ष्मेति सर्वेऽपि भणन्तीत्यर्थः । तस्मिन् तादृशे रामे किमपि यत्किंचिदपि एकमपीत्यर्थः । समलं दोषयुक्तं शीलं वर्तते वा? तदीयानि शीलानि सर्वाण्यपि निर्मलान्येवेत्यर्थः । त्वं भण त्वमेव तस्य शीलान्यसकृत् साक्षादनुभूतवतीति भावः।

च्यावितक्षरमिदम् ॥ २९ ॥

**मां तु सदा करुणात्मेत्याहुः कमलाऽऽश्रयात्मेति ॥ अविकलसच्छीलश्चेत्यास्तव गीः पापकरहिता ज्ञेया ॥ ३० ॥**

**रावणो राममेवं निन्दित्वा स्वोत्कर्षमाह—**

**मां त्विति ॥** 'सीते' इत्यध्याहार्यम् । मां तु—तुशब्दो रामात् स्वस्मिन् भेदप्रदर्शनाय प्रयुक्तः । सदा करुणात्मा—करुणा

दया आत्मा स्वभावस्स्वीयधर्मः यस्य स तथोक्तः । यद्वा—करुणायुक्त आत्मा मनो यस्य सः शाकपार्थिवादित्वात् युक्तपदस्य लोपः । इति, सदा करुणात्मेति स्वस्मिन् करुणायाः सार्वकालिकत्वकथनेनन अदयोपेत इत्युक्तात् रामात् स्वस्मिन् व्यतिरेको द्योतितः । कमलाश्रयात्मा सदेत्यत्रापि संबध्यते कमलायाः लक्ष्म्याः आश्रय आत्मा शरीरं यस्य स तथोक्तः "**लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया**" इत्यमरः । इति, अनेन दुर्दशापन्नात् रामात् स्वस्मिन् व्यतिरेको व्यञ्जितः । किंच—अविकलसच्छीलः अविकलानि परिपूर्णानि सन्ति प्रशस्तानि शीलानि वृत्तानि यस्य स तथोक्तः । इति, अनेन एकेनापि सच्छीलेन रहित इत्युक्तात् रामात् स्वस्मिन् व्यतिरेकः प्रदर्शितः । आहुः जना इति शेषः ॥

**सीता प्रत्याह आः इत्यादिना—**

आः इति कोपे । दुरात्मन्! त्वद्वचनं मे कोपसंपादकमित्यर्थः । "**आस्तु स्यात्कोपपीडयोः**" इत्यमरः । तव गीः वाक् पापकरहिता—कुर्वन्तीति कराः पापानां कराः पापकराः पापिनो जना इति यावत् तेषां इष्टा ज्ञेया ज्ञातुं योग्या पापिनः पापिनस्तव गिरमाद्रियन्ते न सज्जना इत्यर्थः ॥

**प्रत्युक्तिगूढार्थस्तु—**

आः पाप! पापिन्! "**अथ त्रिषु द्रव्ये पापपुण्यसुखादि**

च" इत्यमरः। तव गीः करहिता केन कवर्णेन रहिता त्यक्ता ज्ञेया। तव गिरि कवर्णस्त्याज्यः कवर्णं परित्यज्य वदेत्यर्थः॥

एवं च—

**मां तु सदारुणात्मेत्याहुः मलाश्रयात्मेति।**
**अविलसच्छीलश्चेति॥**

इति वक्तव्यमिति फलितम्॥

मां तु अत्र पक्षे तुशब्दः रामात् रावणे अपकर्षद्योतकः। सदारुणात्मा दारुणेन क्रूरेण आत्मना मनसा सह वर्तत इति सदारुणात्मा क्रूरमना इत्यर्थः। यद्वा—दारुणैः क्रूरैः अशुभकैरित्यर्थः। आत्मभिर्यत्नैस्सह वर्तत इति तथोक्तः अशुभोद्योग इति यावत्। "**आत्मा कलेबरे यत्ने स्वभावे परमात्मनि। चित्ते धृतौ च बुद्धौ च परव्यावर्तनेऽपि च॥**" इति धरणिः। इति, मलाश्रयात्मा मलस्य मान्द्यरूपस्य आश्रय आत्मा बुद्धिर्यस्य स तथोक्तः मन्दबुद्धिरित्यर्थः। इति, किं च—अविलसच्छीलः अविलसत् दुष्टत्वेन अप्रकाशमानं शीलं वृत्तं यस्य स तथोक्तः दुष्टशील इत्यर्थः। इति आहुः। एभिर्विशेषणैः शुभोद्योगसंपन्नात् कुशाग्रबुद्धेः सुशीलाच्च रामात् रावणे अपकर्षो व्यञ्जितः॥

इदं च च्यावितारक्षरम्। आर्यावृत्तम्॥ ३०॥

**पतिं ते जरदात्मानमज्ञानभरवानिति। विदुस्सुमुखि किं तेन धिग्ग्रे ते वागरागभृत्॥ ३१॥**

**पतिमिति** ॥ सुमुखि! शोभनं मुखं यस्यास्तस्याः संबुद्धिः। **स्वाङ्गादित्यादिना** ङीप्। जरदात्मानं जरन् वनवासक्लेशेन जीर्णः आत्मा मूर्तिर्यस्य तम् "**जीनो जीर्णो जरन्नपि**" इत्यमरः। ते तव पतिं रामं अज्ञानभरवान् अज्ञानस्य राजसंपदनुपभोग-निमित्तस्येति यावत्। भरः अतिशयः सोस्यास्तीति तथोक्तः इति विदुः विदन्ति विदो लट् "**विदो लटो वा**" इति लटः झेरुस्। जना इति शेषः। तेन वनवासक्लेशजीर्णेन अज्ञेन च रामेणेत्यर्थः। किं? सुखमिति शेषः। युवत्या बुद्धिमत्याश्च भवत्याः जरता बुद्धिहीनेन च तेन न किंचिदपि सुखं संपद्यत इत्यर्थः॥

**सीता प्रत्याह—**

रे! नीच! धिक् धिगिति निन्दायां त्वामिति शेषः। त्वं निन्द्योसीत्यर्थः। ते वाक् उक्तिः अरागभृत् रागं बिभर्ति पोषयतीति रागभृत् अनुरागसम्पादिनी सा न भवतीत्यरागभृत् तव वाचि मे रागो नास्तीत्यर्थः। निन्द्यस्य तव वागपि निन्द्यैवेति भावः॥ **प्रत्युक्तिगूढार्थस्तु—**

रे! धिक् एवमनुचितभाषिणं त्वामिति शेषः। ते वाक् अरा—न विद्यते रः रेफः यस्यां सा रेफरहिता, गभृत्—गं गकारं बिभर्तीति गभृत् गकारसहिता रेफस्थानापन्नगकारेत्यर्थः। एवं चेत् हृद्येति वाक्यशेषः॥ एवं च—

**पतिं ते जगदात्मानमज्ञा न भगवानिति।**

**विदुस्सुमुखि किं तेन** ॥ इति फलितम्—

जगदात्मानं—जगत् आत्मा मूर्तिर्यस्य तं सर्वात्मकमित्यर्थः। जगतां आत्मानं सर्वान्तर्यामिणमिति चार्थः। ते पतिं अज्ञाः मूढाः मादृशा इत्यर्थः। भगवान्—**ऐश्वर्यस्य समग्रस्य धर्मस्य यशसश्श्रियः। वैराग्यस्य च मोक्षस्य षण्णां भग इतीरणा॥** सोऽस्यास्तीति तथोक्तः। यद्वा—**उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम्। वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति॥** इत्युक्तषड्गुणैश्वर्यसंपन्नस्साक्षाद्विष्णुरित्यर्थः। इति न विदुः न जानन्ति। तेन—अज्ञैस्तस्य तथा अवेदनमात्रेण किम्? न्यूनत्वमिति शेषः। अभिज्ञास्तु तं साक्षाद्भगवानित्येव विदन्तीत्यर्थः॥

इदं प्रतिदत्ताक्षरम्। आनुष्टुभं वृत्तम्॥३१॥

**यस्मादस्मि महाक्रमः कृतिषु भोस्तस्मान्मया रक्षिता लङ्काश्रीरियमन्वहं भवति वै क्रव्यादमोदावहा॥ त्वं प्राप्नोषि कुतस्सदादरमसद्वक्रोद्यमे राघवे मैवं जल्प नृशंस रे पुनरिह क्रोधो भवत्येव हि॥३२॥**

**यस्मादिति**॥ भोः सीते! यस्मात् यतः कारणात् अहमित्यध्याहार्यम्। कृतिषु कार्येषु महाक्रमः महान् प्रशस्तः क्रमः प्रकारः यस्य स तथोक्तः अस्मि तस्मात् ततः मया रक्षिता इयं लङ्काश्रीः लङ्काराज्यलक्ष्मीरित्यर्थः। अन्वहं सदा क्रव्यादमोदावहा—क्रव्यादानां रक्षसां मोदावहा संतोषकरी भवति वै भवत्येव। वै इति निश्चये **"वै पादपूरणे। संबोधने चा-**

नुनये निश्चये" इति मेदिनी । मम प्रशस्तकार्यक्रमरक्षणत्वादेव इयं लङ्काराज्यलक्ष्मीः रक्षसामनवरतसंतोषसंदायिनी भवतीत्यर्थः । वक्रोद्यमे—वक्रः प्रवासित्वादिना लोकविलक्षणः उद्यम उद्योगो यस्य तस्मिन् राघवे रामे त्वं कुतः कस्मात् सदा आदरं प्रीतिं अमत् असमीचीनं यथा तथा प्राप्नोषि? मुहुर्मुहुः प्रार्थयमानमपीदृशं प्रशस्तराज्यभारक्रमं मामनादृत्य उदासीनं तादृशं वक्रोद्योगं रामं सदा यदाद्रियसे तदसमीचीनमित्यर्थः ॥ सीता प्रत्याह—

रे नृशंस घातुक! "नृशंसो घातुकः क्रूरः" इत्यमरः । पुनः भूयः एवं अनेन प्रकारेण मा जल्प हि यस्मात् इह त्वज्जल्पनविषये क्रोधः कोपः भवत्येव असंशयं भवतीत्यर्थः। ममेत्यध्याहार्यम् । क्रोधो यदि भवेन्मत्तस्तव महाननर्थस्संपत्स्यत इति भावः । प्रत्युक्तिगूढार्थस्तु—

रे नृशंस! पुनः एवं—कशब्दविशिष्टतया मा जल्प हि यस्मात् इह त्वज्जल्पिते कः कशब्दः ध एव धकारस्सन्नेव भवति । वाच्यत्वेनेति शेषः । कशब्दस्थानापन्नधकारत्वेन वाच्यमित्यर्थः ॥ एवं च—

यस्मादस्मि महाधमः कृतिषु भोस्तस्मान्मया रक्षिता
लङ्काश्रीरियमन्वहं भवति वैधव्यादमोदावहा ॥
त्वं प्राप्नोषि कुतस्सदा दरमसद्वधोद्यमे राघवे ।

इति वाच्यमिति फलितम् ॥

भोस्सीते! यस्मात् अहं कृतिषु कार्येषु विषये महाधमः अधमोत्तमः अतिनीच इति यावत्। अतिनीचकार्यप्रवृत्त इत्यर्थः। यद्वा—कृतिषु कुशलेषु धीमत्सु वा निर्धारणे सप्तमी। "कृती कुशल इत्यपि, धीमान् सूरिः कृती कृष्टिः" इति चामरः। महाधमः कुशलापशदतमः धीमदपशदतमो वेत्यर्थः। अस्मि। तस्मात् मया रक्षिता इयं लङ्काश्रीः वैधव्यात्—विगतो धवो नाथो यस्यास्सा विधवा अनाथा तस्या भावो वैधव्यं तस्मात् तत्प्राप्येत्यर्थः। ल्यब्लोपे पञ्चमी। अन्वहं अमोदावहा असंतोषकरी भवति। अतिनीचकार्यप्रवृत्तस्य कार्यकुशलात्यधमस्य वा अभिज्ञजनात्यधमस्य वा आत्मनो विनाशात् लङ्केयमनाथा सदा सर्वान् अचिरादेव दुःखयिष्यतीत्यर्थः। वर्तमानसामीप्ये लट्। उक्तश्चायमेवार्थो रामायणे सीतया राक्षसीः प्रति—

नूनं लङ्का हते पापे रावणे राक्षसाधमे।
शोषं यास्यति दुर्धर्षा प्रमदा विधवा यथा॥
पुण्योत्सवसमुत्था च नष्टभर्त्री सराक्षसी।
भविष्यति पुरी लङ्का नष्टभर्त्री यथाऽङ्गना॥ इति।

राघवे रामे असद्वधोद्यमे असतां दुष्टानां अस्मादृशानामित्यर्थः। वधे संहारे उद्यमो यस्य तस्मिन् सति त्वं कुतः कस्मात् सदा दरं भयं "दरत्रासौ भीतिर्भीस्साध्वसं भयम्" इत्यमरः। प्राप्नोषि? दुष्टसंहारोद्यतश्श्रीरामः अस्मादृशास्सर्वानप्यचिरादेव निहत्य त्वामधिगमिष्यति अतो मा भैषीरित्यर्थः। इदं च प्रतिदत्ताक्षरम्॥

**चारानप्यात्मनीनान् परमकुशलधीरेष नैवाभिकाङ्क्षेत् पत्तिव्यूहैः पुरोगैर्जनकनृपसुते किं नु साहाय्यमस्य । रम्भातिप्रीतिकारिण्यहह परिलसत्येतदीयाऽऽकृतिश्रीः सम्यग्विज्ञायतेऽदो वचनमनुपदं ते मुखाकारतो हि ॥ ३३ ॥**

**चारानिति** ॥ जनकनृपसुते जानकि! परमकुशलधीः परमा सर्वोत्कृष्टा कुशला विषयग्रहणनिपुणा धीर्बुद्धिर्यस्य स तथोक्तः । एषः रावणः आत्मनीनानपि आत्मने हितानपि "**आत्मन्विश्वजनभोगोत्तरपदात्खः**" इति खः । चारान् गूढपुरुषान् "**चारस्तु गूढपुरुषः**" इत्यमरः । नाभिकाङ्क्षेदेव नेच्छेदेव । स्वमहाबुद्धिबलादेव विदितसकलविषयस्य कुतश्चाराणां साहाय्यमित्यर्थः । पुरोगैः पुरः गच्छन्तीति पुरोगाः "**अन्येष्वपि**" इति डः । पत्तिव्यूहैः पत्तीनां पदातीनां "**पदातिपत्तिपदगपादातिकपदाजयः**" इत्यमरः । व्यूहैः विन्यासैः "**व्यूहस्तु बलविन्यासः**" इत्यमरः । अस्य रावणस्य साहाय्यं किं नु? स्वतश्शूरस्य पदातीनां साहाय्यमनपेक्ष्यमेवेत्यर्थः । एतदीया रावणसंबन्धिनी आकृतिश्रीः आकारसंपत् रम्भातिप्रीतिकारिणी रम्भायाः रम्भानाम्न्याः देवाङ्गनायाः अतिप्रीतिं महासन्तोषं करोतीति तथोक्ता परिलसति परिशोभते । कामितपरमसुन्दरपुरुषा महासौन्दर्यतः प्रसिद्धा रम्भाऽपि मद्रूपसम्पदा परितुष्यति किमुत भवादृश्यो मानुष्य इत्यर्थः । अहहेत्याश्चर्ये मद्रूपसम्पत् आश्चर्यकरीत्यर्थः ॥

**सीता प्रत्याह—**

अनुपदं पदेपदे अनुपदं वीप्सायामव्ययीभावः । अत्र पदशब्दो वाक्यपरः "पदं शब्दे च वाक्ये च" इति कोशात् प्रतिवाक्यमित्यर्थः । अदः स्वोत्कर्षपरमिति यावत् । वचनं लक्षणया तत्प्रतिपाद्य उत्कर्ष इत्यर्थः । ते तव मुखाकारतो हि मुखाकारेणैव सम्यक् सुष्ठु विज्ञायते प्रतिवाक्यं त्वद्वचनप्रतिपाद्यस्त्वदुत्कर्षः सामुद्रिकाभिज्ञैरखिलैरपि त्वन्मुखावलोकनेनैव सुस्पष्टं ज्ञायत इत्यर्थः । पुनस्त्वं कुतो बहुधा जल्पसि? मा जल्पेति भावः॥

**प्रत्युक्तिगूढार्थस्तु—**

अदः—स्वोत्कर्षपरत्वेन दुष्टमित्यर्थः । ते वचनं अनुपदं पदेपदे अनुपदं अत्र पदशब्दः श्लोकपादार्थकः प्रतिपादमित्यर्थः "**पदं शब्दे च वाक्ये च व्यवसायापदेशयोः । श्लोकपादेऽपि च क्लीबम्**" इति विश्वः । मुखाकारतः—मुखे आदौ य आकारस्तेन, उपलक्षितमिति शेषः प्रतिपादं आदौ आकारघटितमिति यावत् । सम्यक् समीचीनं श्रव्यमित्यर्थः । विज्ञायते हि॥

एवं च—

**आचारानप्यात्मनीनान् परमकुशलधीरेष नैवाभिकाङ्क्षेत्**
**आपत्तिव्यूहैः पुरोगैर्जनकनृपसुते किं नु साहाय्यमस्य ।**
**आरम्भातिप्रीतिकारिण्यहह परिलसत्येतदीया कृतिश्रीः॥**

जनकनृपसुते! परमकुशलधीः—परमत्यन्तं परमित्येतत् मान्तमव्ययम् अकुशला अमङ्गला धीर्यस्य स तथोक्तः अतिदुर्बुद्धिरि-

त्यर्थः । एष रावणः आत्मनीनान् आत्महितान् आचारानपि सद्वृत्तान्यपि नाभिकाङ्क्षेदेव । दुर्बुद्धेरस्य सदाचारेषु कथं प्रवृत्तिस्स्यादिति भावः । पुरोगैः पुरस्स्थितैः समीपवर्तिभिरित्यर्थः । आपत्तिव्यूहैः आपन्निवहैः हेतुभिः अस्य साहाय्यं किं नु? आसन्नविपत्परंपरस्य अस्य पुत्रमित्रकलत्रसचिवादिभिः किमपि साहाय्यं कर्तुमशक्यमित्यर्थः । एतदीया कृतिश्रीः कार्यसंपत् आरम्भातिप्रीतिकारिणी आरम्भे उपक्रमे अतिप्रीतिकारिणी परिणामे तु महादुःखकरीत्यर्थः । अधिदत्ताक्षरमिदं चित्रम्—

कस्मिंश्चिदधिके वर्णे दत्तेऽर्थो यत्र भिद्यते ।
अधिदत्ताक्षरं नाम चित्रं तदिति बुद्ध्यताम् ॥

इति तल्लक्षणात् ॥ ३३ ॥

**सोत्साहो वनतश्श्रियोऽननुभवाद्भूयःकृशात्मा सदाशुष्यत्कान्तिमुखः कदाऽप्यविशदारम्भः क्व ते वल्लभः ॥ सीते शङ्करतो वरानुपगतः क्वाहं महाकोशभाक् एतद्वेद्मि न शंस पङ्क्लिवचो रक्षोऽन्ववायाधम ॥ ३४ ॥**

**सोत्साह** इति ॥ सीते! वनतः वने वनतः सप्तम्यन्तात् तसिः लक्षणया वनवसतावित्यर्थः । सोत्साहः उत्साहेन सह वर्तत इति सोत्साहः आसक्त इति यावत् । अवीरतया वनमेव सादरं शरणं मन्यमान इत्यर्थः । श्रियः राज्यसम्पदः अननुभवात् अ-

नुपभोगात् हेतोः लक्षणया तच्चिन्नायास्तन्निमित्तानशनादेर्वेत्यर्थः। भूयःकृशात्मा—भूयः अतिशयेन बहु बहुतरमिति यावत्। भूयो यथा तथा कृशः क्षीणः आत्मा शरीरं यस्य स तथोक्तः। अत एव सदाशुष्यत्कान्तिमुखः सदा प्रतिक्षणं शुष्यन्ती म्लायन्ती कान्तिर्यस्य तत्। सदाशुष्यत्कान्ति तादृशं मुखं यस्य स तथोक्तः। कदाऽपि एकदाऽपीत्यर्थः। अविशदारम्भः विशदाश्शुद्धाः लक्ष्मी-कटाक्षसंपादका इत्यर्थः। आरम्भा उद्योगाः ते न विद्यन्ते यस्य स तथोक्तः सदुद्योगरहित इत्यर्थः। तादृशदुर्दशापन्नस्य सदुद्योगेषु कथं प्रवृत्तिः? उद्योगराहित्ये कथं लक्ष्म्याः प्राप्तिः? अतो नि-त्यदरिद्र इति भावः। ते वल्लभः प्रियः राम इत्यर्थः। क? श-ङ्करतः परमेश्वरात् लक्षणया तदनुग्रहादित्यर्थः। वरान् नित्यैश्व-र्यनित्यायुरादीन् "देवाद्वृते वरश्श्रेष्ठे त्रिषु" इत्यमरः। उपगतः प्राप्तः अत एव महाकोशभाक् महतः अक्षयानित्यर्थः। कोशान् अर्थौघान् भजतीति तथोक्तः। अतिदुष्करेण तपसा परमेश्वरमा-राध्य तदनुग्रहादेव लोकोत्तरसंपन्निचयं प्राप्य परिशोभमान इत्यर्थः। अहं क? तादृशस्य रामस्य ईदृशस्य मम च महदन्तरमस्तीत्यर्थः। अतो नित्यदरिद्रं तमनादृत्य नित्यैश्वर्यसंपन्नं मां वृणीष्वेति भावः॥

सीता प्रत्याह—

रक्षोऽन्ववायाधम! रक्षसां राक्षसानां अन्ववाये वंशे अ-धम नीच! वेद्मि जानामि तवैतादृशमयोग्यं वच इति शेषः। एतत् पङ्किलवचः पङ्कः दोषः अस्मिन्नस्तीति पङ्किलं पिच्छादि-

त्वात् इलच् । तादृशं च तत् वचश्च पङ्किलवचः न शंस न वद एतादृशं दुर्वचः असकृत् श्रुतवत्या ममाग्रे इतःपरं कदाऽपि मा कथयेत्यर्थः ॥

प्रत्युक्तिगूढार्थस्तु—

रक्षोऽन्ववायाधम ! एतत् वचः नशं—न विद्यते शः शकारो यस्मिंस्तत् नशं नञर्थकेन नशब्देन सह सुप्सुपेति समासः । शकाररहितं, सपं किल पेन पकारेण सह वर्तत इति सपं पकारसहितं किल वेद्मि । किलेति प्रसिद्धौ ॥

[illegible] —

सोत्साहोऽवनतप्रियो ननु भवाद्भूयःकृपात्मा सदा
पुष्यत्कान्तिमुखः कदाप्यविपदारम्भः क ते वल्लभः ॥
सीते पङ्करतोऽवरानुपगतः क्वाहं महाकोपभाक् ॥

इति श्रीरामे त्वयि च शकारस्थानापन्नपकारं सत् अर्थद्वारा लोके प्रसिद्धमित्यर्थः ॥

अत्र पक्षे नन्विति संबोधने । ननु सीते! सोत्साहः उत्साहेन उत्साहशक्त्या सह वर्तत इति तथोक्तः । उत्साहशब्दः प्रभावमन्त्रयोरप्युपलक्षणम् प्रभावोत्साहमन्त्रशक्तियुक्त इत्यर्थः । अनेन वनवासिन्यपि रामे नैसर्गिकं महाराजत्वं द्योतितं भवति । भवात् जन्मनः जन्मारभ्येत्यर्थः "जन्महरौ भवौ" इत्यमरः । इदं वक्ष्यमाणे विशेषणत्रयेऽपि संबध्यते । अवनतप्रियः अवनतानां नम्राणां प्रियः अवनताः प्रिया अस्येति वा । अनेन

रामे भक्तजनैकवत्सलत्वं द्योत्यते। अवनतप्प्रिय इत्यत्र "अनचि च" इति पकारस्य द्वित्वम्। भूयःकृपात्मा भूयसी कृपा आत्मा स्वभावो यस्य स तथोक्तः अनेन अनितरसाधारणाव्याजकरुणाशीलत्वं रामे प्रकाशितं भवति। सदापुष्यत्कान्तिमुखः सदा पुष्यन्ती परिपोषं गच्छन्ती कान्तिर्यस्य तत् सदापुष्यत्कान्ति तादृशं मुखं यस्य स तथोक्तः सर्वदा सुप्रसन्नवदन इत्यर्थः। अनेन महाप्रभावेऽपि रामे आनतजनातिसुलभत्वं व्यज्यते। कदाऽपि अविपदारम्भः—न विद्यन्ते विपदारम्भाः जगद्विपत्करोद्योगाः यस्य स तथोक्तः सर्वदा जगद्धितोद्यम इत्यर्थः। ते वल्लभः क? पङ्करतः पङ्केषु परपीडनपरदारग्रहणादिपापेषु रत आसक्तः अवरान् नीचान् उपगतः समीपे प्राप्तः दुर्जनैकपरिवृत इत्यर्थः। महाकोपभाक् महान्तं दुर्निवारमिति यावत् कोपं भजतीति तथोक्तः अतिरौद्र इत्यर्थः। एभिर्विशेषणैः रावणे अगणितदुर्गुणाश्रयत्वं प्रकाश्यते। अहं एतादृश इत्यर्थः। क? तस्य महात्मनः प्रस्तावे अहमस्मरणीयः परं तु महापापोऽहं भगवता तेन वध्य एवेति भावः। प्रतिदत्ताक्षरमिदं चित्रम्॥

**न यन्मन्त्राकारेङ्गितमपि हितं भूमितनये प्र-**
**कृत्या काकुत्स्थस्स खलु कुपितोऽनादरपदम्॥**
**गुणाढ्ये किं तेऽहा सुरविटपिलीले मयि घृणा**
**किमात्थैवं पापिन्नपि समुचितं भाषितमिदम्॥३५**

राज्ञा राज्यमूलानां मन्त्राकारेङ्गितानां अवश्यं गोपनीयत्वेन अतथाविधो रामः राज्यभ्रंशेन दारिद्र्यमापन्नः दारिद्र्यसहजं कोपमाश्रित्य सर्वेषामनादरस्य विषयीभूत इत्याह न यदित्यादिना—

भूमितनये सीते! यन्मन्त्राकारेङ्गितं यस्य रामस्य मन्त्राकारेङ्गितं मन्त्रः गुप्तवादः "**वेदभेदे गुप्तवादे मन्त्रः**" इत्यमरः। आकारः शोकहर्षादिसूचकः मुखमालिन्यरागादिः इङ्गितं हृद्गतो भावः "**इङ्गितं हृद्गतो भावः**" इति सज्जनः। एतेषां समाहारः मन्त्राकारेङ्गितम् अपिहितं पिहितं न किं तु प्रकाशितमेवेत्यर्थः "**अपिधानतिरोधानपिधानाच्छादनानि च**" इत्यमरः। अत एव राज्यहीनः दुर्दशामापन्नः वनाद्वनं परिभ्रमतीति भावः। प्रकृत्या स्वाभावेन कुपितः कोपनः "**प्रकृत्यादिभ्य उपसंख्यानम्**" इति तृतीया। सः काकुत्स्थः ककुदि वृषाङ्के तिष्ठतीति ककुत्स्थः ककुत्स्थ इति इक्ष्वाकुवंशे प्रसिद्धः कश्चिद्राजा तस्य गोत्रापत्यं पुमान् काकुत्स्थः रामः ककुत्स्थत्वं च तस्य पुराणप्रसिद्धम्। तथा च कालिदासकृतौ रघुवंशे—

**इक्ष्वाकुवंश्यः ककुदो नृपाणां ककुत्स्थ इत्याहितलक्षणोऽभूत्।**
**काकुत्स्थशब्दं यत उन्नतेच्छाः श्लाघ्यं दधत्युत्तरकोसलेन्द्राः॥**

इत्यस्य श्लोकस्य व्याख्याने महोपाध्यायैर्विवृतम् यथा—

"पुरा किल पुरंजयो नाम साक्षाद्भगवतो विष्णोरंशावतारः कश्चिदैक्ष्वाको राजा देवैस्सह समयबन्धेन देवासुरयुद्धे महोक्ष-

रूपधारिणः महेन्द्रस्य ककुदि स्थित्वा पिनाकिलीलया निखिलमसुरकुलं निहत्य ककुत्स्थसंज्ञामलभत" इति पौराणिकी कथाऽनुसंधेया इति ॥

अनादरपदं खलु अनादरस्य अप्रीतेः पदं स्थानं खल्विति वाक्यालङ्कारे आदरपदं न खलु इति वा । तादृशं रामं जगति को वा आद्रियेतेति भावः । गुणाढ्ये गुप्तमन्त्राकारेङ्गितत्वाद्यखिलगुणविशिष्टे सुरविटपिलीले सुरविटपिनः कल्पतरोः लीला औदार्यविलासः यस्य तस्मिन् तत्सदृशौदार्यविलास इत्यर्थः । मयि घृणा जुगुप्सा ते उचितज्ञाया इति भावः । अर्हा किम्? नार्हेत्यर्थः । गुणहीनं राममादृत्य गुणाढ्यं मां अनादर्तुमनुचितम् । तमनादृत्य मामाद्रियस्वेति भावः ॥

**सीता प्रत्याह—**

पापिन्! एवं अनेन प्रकारेण किं किमर्थं आत्थ भाषसे? इदं भाषितं श्रीरामनिन्दनात्माभिनन्दनरूपं अपि समुचितं उचितं किम्? अनुचितमित्यर्थः । अपिः प्रश्ने "**गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपि**" इत्यमरकोशात् ॥

**प्रत्युक्तिगूढार्थस्तु—**

पापिन्! एवं—अपिहितमित्यादिपिवर्गविशिष्टतया किं किमर्थं आत्थ? इदं भाषितं न यन्मन्त्राकारेङ्गितमपिहितामित्यादिकम् । अपि न विद्यते पिः यस्मिंस्तत् पिवर्णरहितं सदित्यर्थः । समुचितं श्रव्यं भवतीति शेषः ॥

एवं च—

न यन्मन्त्राकारेङ्गितमहितं भूमितनये ।
प्रकृत्या काकुत्स्थस्स खलु कुतोऽनादरपदम् ॥
गुणाढ्ये किं तेऽर्हाऽऽसुरविटलीले मयि घृणा ।

इति फलितम् ॥

अत्र पक्षे गुणाढ्ये! इत्येतत् भूमितनये! इत्यस्य विशेषणम् । गुणाढ्ये! रूपलावण्यादिगुणसमृद्धे भूमितनये! यन्मन्त्राकारेङ्गितं यस्य मन्त्राकारेङ्गितं प्रकृत्या स्वभावेन अहितं न किंतु हितकरमेवेत्यर्थः । सः काकुत्स्थः कुतः खलु कस्मात्खलु अनादरपदम्? सर्वथा आदरणीयस्वभाव एवेत्यर्थः । खल्विति जिज्ञासायाम् । आसुरविटलीले असुरस्येयं आसुरी भयंकरीत्यर्थः। विटलीला विटविलासः यस्मिंस्तस्मिन् मयि घृणा करुणा "जुगुप्सा करुणा घृणा" इत्यमरः । ते महापतिव्रताया इति भावः अर्हा किम्? दुर्वृत्ते मयि करुणा न कर्तव्येत्यर्थः । च्यावितानक्षरमिदं चित्रम् ॥ ३९ ॥

यत्त्वां लङ्कामनैषं सुमुखि तदहमस्म्यद्य लब्धांचितश्रीरित्युक्त्या कामये त्वामिह ननु सुचिरासक्तचेता यतोऽहम् ॥ शङ्कां संत्यज्य मां द्राक्कलय विरचिताभीप्सिताशेषभोगं जल्पाकेदं वचो रे तव परमहितं निश्चिनु क्षुद्रबुद्धे ॥ ३६ ॥

**यदिति** ॥ ननु सुमुखि! यत् यस्मात् त्वां लङ्कां लङ्कानगरीं अनैषं आनयम् । नयतेः परस्मैपदिनो लुङ् । तत् तस्मात् अत्र तवानयनादित्यर्थः । अहं अद्य लब्धाञ्चितश्रीः लब्धा अञ्चिता सर्वैः पूजिता श्रीः राज्यसंपत् येन स तथोक्तः मम राज्यश्रीरेतावन्तं कालं साधारण्येवासीत् इदानीं तु महाभाग्यायास्तव योगात् विशदमुक्तायोगात् कनकसूत्रिकेव सर्वोत्कर्षेण परिशोभत इत्यर्थः । इह—लङ्कायां त्वत्परिचितजनरहितायामिति भावः । लब्धाञ्चितश्रीरत्युक्त्येत्यत्र रोरीत्यनेन पूर्वस्य रेफस्य लोपः । रत्युक्त्या रतिविषयवाचा उपलक्षित इति शेषः । रतिविषयिका वाचो व्याहरन्नित्यर्थः । त्वां कामये इच्छामि । अत्र हेतुमाह—यतः यस्मात् अहं सुचिरासक्तचेताः त्वयीति शेषः । सुचिरेण दीर्घकालेन आसक्तं चेतः यस्य स तथोक्तः । त्वयि चिरादनुरक्तत्वात् अहं त्वां कामय इत्यर्थः । चिरादनुरक्तस्य मम कामनां शीघ्रं पूरयेत्याह शङ्कां संत्यज्येत्यादिना—त्वं शङ्कां राक्षसोऽयं मां किं वा कुर्यादिति भयं संत्यज्य सम्यक् त्यक्त्वा अतिनिश्शङ्का सतीत्यर्थः । विरचिताभीप्सिताशेषभोगं विरचिताः निष्पादिताः अभीप्सिताः कामिताः अशेषास्समस्ताः भोगास्सुखविशेषाः येन तं तथोक्तं मां द्राक् अविलम्बं कलय प्राप्नुहि ॥

**सीता प्रत्याह—**

जल्पाक वाचाट! "**स्याज्जल्पाकस्तु वाचालो वाचाटो बहुगर्ह्यवाक्**" इत्यमरः । रे, क्षुद्रबुद्धे! नीचमते! तव इदं

वचः परमधिकं अहितमनिष्टकरं सत् निश्चिनु दृढं जानीहि। निष्पूर्वकात् चिनोतेः परस्मैपदिनः लोटि मध्यमपुरुषैकवचनम् ॥

**मत्युक्तिगूढार्थस्तु—**

जल्पाक! रे! क्षुद्रबुद्धे! तव इदं—"**यत्त्वां लङ्कामनैषं सुमुखि तदहमस्म्यद्य लब्धाञ्चितश्रीः**" इत्यादौ चिवर्णविशिष्टत्वेन दुरर्थबोधकं वचः निश्चि निर्गतश्चिः यस्मात्तत् निश्चि चिवर्णरहितं सदित्यर्थः। परमहितं नु श्रोतॄणामिष्टतमं खलु। न्वित्यनुनये "**नु स्यात् प्रश्ने विकल्पार्थेऽप्यतीतानुनयार्थयोः**" इति विश्वकोशात् ॥

एवं च—

**यत्त्वां लङ्कामनैषं सुमुखि तदहमस्म्यद्य लब्धान्तश्रीः**
**अत्युक्त्या कामये त्वामिह ननु सुरासक्तचेता यतोऽहम्॥**
**शङ्कां संत्यज्य मां द्राक्कलय विरताभीप्सिताशेषभोगम् ॥**

इति फलितम् ॥

ननु सुमुखि! यत् यस्मात् त्वां लङ्कामनैषं तत् तस्मात् अहमद्य लब्धान्तश्रीः लब्धान्ता प्राप्तावसाना श्रीर्यस्य स तथोक्तः अस्मि। महापतिव्रतायास्तव अत्रानयनात् महापराधस्य मम सकलोपि राज्यविभवोऽद्य विनाशोन्मुख इत्यर्थः। अस्मिन् पक्षे श्रीरत्युक्त्येत्यत्र अत्युक्त्येति छेदः। इह त्वां अत्युक्त्या स्वच्छन्दवचोभिरिति यावत्। कामये। अत्र हेतुमाह—यतः यस्मात् अहं सुरासक्तचेताः सुरायां मद्ये सक्तं संबद्धं चेतः

यस्य स तथोक्तः सुरापायीत्यर्थः । अस्मि । सुरापायिनः स्वच्छन्दवचनं नैसर्गिकमिति भावः । शङ्कां वितर्कं "शङ्का त्रासवितर्कयोः" इति रत्नमाला । संत्यज्य मां द्राक् विरताभीप्सिताशेषभोगं विरताः अवसन्नाः अभीप्सिताः अशेषाः भोगाः आयुरारोग्यैश्वर्यादयः यस्य तं तथोक्तं कलय कुरु । एष कथं वा विनाश्य इति वितर्कमकुर्वती दुष्टं मां शीघ्रं विनाशयेत्यर्थः । इदं च च्याविताक्षरम् ॥ ३६ ॥

**विरक्तो हेयेऽर्थे स्वकृतिषु महाविभ्रमयुतो-**
**स्म्यहं विश्वाराध्यो विविधमहितोद्योगनिचयैः ॥**
**विदग्धोसावेवेत्यपि च निखिलैरस्म्यवधृतः न ज-**
**ल्पैवं पापिन्नविलसति हि त्वद्वच इदम् ॥ ३७ ॥**

**विरक्त इति** ॥ हे सीते! इत्यध्याहार्यम् । अहं हेये हातुं त्यक्तुं योग्ये नीच इत्यर्थः । अर्थे कार्ये विरक्तः अपरागवान् अकार्यपराङ्मुख इत्यर्थः । स्वकृतिषु आत्मकार्येषु विषये महाविभ्रमयुतः महता अनितरसाधारणेन विभ्रमेण विलासेन युतः युक्तः लीलामात्रकल्पितनिखिलकार्य इत्यर्थः । विविधमहितोद्योगनिचयैः विविधानामनेकप्रकाराणां महितानां पूजितानां सतामित्यर्थः । उद्योगानामुद्यमानां निचयैः हेतावित्यनेन हेत्वर्थे तृतीया । विश्वाराध्यः विश्वस्य जगतः आराद्धुं योग्यः अस्मि । अपि च विदग्धः विद्वान् कार्याकार्यविज्ञानकुशल इत्यर्थः । असावेव अयं

रावण एव इति निखिलैः अवधृतः निश्चितः जगति ईदृशो विवेकवानन्यो नास्तीति दृढं विज्ञात इत्यर्थः । अस्मि ॥

**सीता प्रत्याह—**

**पापिन्! असत्यवचनप्रयुक्तदुरितयुक्त!** एवं अयथार्थत्वेन न जल्प वचनमिति शेषः । हि यस्मात् इदं उक्तमित्यर्थः । त्वद्वचः ते वचनं न विलसति न शोभते न कोपि तवेदं वचनमाकर्ण्य अभिनन्दतीत्यर्थः ॥

**प्रत्युक्तिगूढार्थस्तु—**

पापिन्! एवं "**विरक्तो हेयेऽर्थे**" इत्यादौ विवर्णविशिष्टत्वेन न जल्प हि यस्मात् इदं त्वद्वचः अवि अस्मिन्पक्षे पापिन्नविलसतीत्यत्र पापिन्+अवि+लसति इति छेदः । अवि—न विद्यते विः यस्मिंस्तत् विवर्णरहितं सदित्यर्थः । लसति शोभते। तवेदं वचः विवर्णविशिष्टं न शोभते विवर्णरहितं चेत् शोभते अतः विवर्णं विहाय वदेत्यर्थः ॥

एवं च—

**रक्तो हेयेऽर्थे स्वकृतिषु महाभ्रमयुतो-**
**स्म्यहं श्वाराध्योऽधमहितोद्योगनिचयैः ॥**
**दग्धोसावेवेत्यपि च निखिलैरस्म्यवधृतः ।**

इति वक्तव्यमिति फलितम् ॥

हे सीते! अहं हेयेऽर्थे रक्तः अनुरक्तः अकार्यैकासक्त इति यावत् । स्वकृतिषु आत्मकार्येषु विषये महाभ्रमयुतः महा-

भ्रमेण दुर्निवारभ्रान्त्या युतः परदारानुरागादिप्रयुक्तमोहोपहतबुद्धित्वेन यत्किञ्चित्कार्यं कर्तुमप्यजानन्नित्यर्थः। अधमहितोद्योगनिचयैः अधमानां नीचानां हिताः य उद्योगाः तेषां निचयैः बहुभिर्नीचकार्यैरित्यर्थः। हेतुभिः श्वाराध्यः श्वभिः शुनकैः तत्सदृशैर्नीचैरिति यावत्। आराध्यः पूज्यः अकार्योद्यतस्सद्भिः कथमाराध्यत इति भावः। अपि च असौ रावणः दग्ध एव असंशयं चिताग्निना भस्मीकृतप्रायः इति निखिलैः अवधृतः। दुष्टोऽयं रावणः दुष्कृतपरिपाकेन अचिरादेव विनाशमुपयास्यतीति प्राज्ञैस्सर्वैरपि निश्चित इत्यर्थः। अस्मि। इदं च च्यावितात्क्षरम् ॥३७॥

**को वाऽन्यः पितृभाषितैकनिहतो रामाद्भुवि श्रूयते कश्चान्योतिहसास्पदात्मचरितस्तस्मात्समाख्यायते॥ नो जानात्यमहार्थसंभव इति क्षोण्यां जनस्तं कथं दुष्टस्वान्तविहारिणीति खलु रे ते वागियं भाति मे॥३८॥**

क इति॥ सीते! इत्यध्याहार्यम्। भुवि रामात् पितृभाषितैकनिहतः पितुः भाषितेन वचसा "**भाषितं वचनं वचः**" इत्यमरः। एकं मुख्यं यथा तथा निहतः हिंसितः वनवासेन क्लेशित इत्यर्थः। अन्यः को वा श्रूयते? गुणिनः पुत्राः पितृभिर्वात्सल्येन उत्तरोत्तराभ्युदयविभवान् नीयन्ते रामस्तु निर्गुणत्वात् राज्यं मुक्त्वा वनं गच्छेति पित्रा तथा दुर्दशां गमितः

अतस्तस्मात् निर्गुणोऽन्यो न कोपीत्यर्थः। अन्यथा ज्येष्ठत्वेन न्याय्यप्राप्तस्य राज्यस्य त्यागायोगात्। किं च अतिहसास्पदात्मचरितः आतिहसस्य अतिशयितहास्यस्य "**अथो हसः। हासो हास्यं च**" इत्यमरः। आस्पदं स्थानं आत्मनः चरितं कर्म स्त्रीवधादिकं यस्य स तथोक्तः। तस्मात् रामात् अन्यः कः समाख्यायते उच्यते न कोपीत्यर्थः। क्षोण्यां जनः तं पूर्वोक्तदुर्गुणाविशिष्टं रामं अमहार्थसंभवः महान् अर्थः प्रयोजनं यस्य सः महार्थः तादृशस्संभव उदयो यस्य स तथोक्तः। तादृशो न भवतीत्यमहार्थसंभवः व्यर्थजन्मेति यावत्। इति कथं नो जानाति? व्यर्थजन्मेति सर्वेऽपि जानन्त्येवेत्यर्थः॥

**सीता प्रत्याह—**

रे! नीच! ते तव इयं "**को वाऽन्यः पितृभाषितैकनिहतो रामात्**" इत्यादिः श्रीरामनिन्दापरा वाक् दुष्टस्वान्तविहारिणी दुष्टानां सज्जननिन्दाकर्णनलोलुपानामित्यर्थः। स्वान्ते चित्ते विहरतीति तथोक्ता। दुर्जनानां मनःप्रिया न तु सज्जनानामित्यर्थः। इति मे भाति खलु मया ज्ञायत एवेत्यर्थः। खल्विति निश्चये॥

**प्रत्युक्तिगूढार्थस्तु—**

अस्मिन् पक्षे दुष्टस्वान्तविहारिणीत्यत्र दुष्टस्वान्त+विहा+रिणी इति पृथक् पदानि। रे दुष्टस्वान्त! दुष्टं निर्दोषेऽपि दोषग्रहणेन कलुषितं स्वान्तं यस्य तस्य संबुद्धिः। ते इयं वाक्

विहा—विगतो हो यस्यास्सा हकाररहिता, रिणी—रः अस्याम-स्तीति रिणी • रेफयुक्ता हकारस्थानापन्नरेफेति यावत् । इति मे भाति खलु ॥ एवं च—

**को वाऽन्यः पितृभाषितैकनिरतो रामाद्भुवि श्रूयते**
**कश्चान्योतिरसास्पदात्मचरितस्तस्मात्समाख्यायते ।**
**नो जानात्यमरार्थसंभव इति क्षोण्यां जनस्तं कथम् ॥**

इति फलितम् ॥ भुवि रामात् पितृभाषितैकनिरतः पितुः भाषिते एकस्मिन् निरतः तत्परः शिवभागवतवत् समासः । स्वसुखमनादृत्य महाक्लेशकरत्वेन दुष्करतरस्यापि पित्रादेशस्य सादरं कर्तेत्यर्थः । अन्यः को वा श्रूयते? न कोपीत्यर्थः । किं च अतिरसास्पदात्मचरितः अतिरसस्य अतिशयितगुणस्य अतिशयितजनानुरागस्येति वा "**गुणे रागे द्रवे रसः**" इत्यमरः । आस्पदं आत्मनः चरितं चरित्रं यस्य स तथोक्तः । जगदभिनन्दनीयदुष्टसंहारादिचरित्र इत्यर्थः । तस्मात् अन्यः कः समाख्यायते? न कोपीत्यर्थः । जनः तं तादृशं रामं क्षोण्यां अमरार्थसंभवः अमराणामिन्द्रादीनां अर्थः दुष्टसंहाररूप-प्रयोजनं यस्मात् तादृशस्संभवोऽवतारो यस्य स तथोक्तः । इति कथं नो जानाति? दुष्टपरिपीडितानिन्द्रादीन् स्ववचनानुसारेण उद्धर्तुं भूमाववतीर्णस्साक्षाद्भगवानिति तत्त्वज्ञास्सर्वेऽपि सर्वथा जानन्त्ये-वेत्यर्थः । प्रतिदत्ताक्षरमिदं चित्रम् ॥ ३८ ॥

**यः प्राप्तः कितवस्तुतेर्विषयतां रामं प्रकृत्या त्विमं सर्वेभ्यश्चाकितं परं क्षितितले धीरास्समाच-**

क्षते । ईदृक्षे ननु युज्यते किमहिते प्रीतिस्तवोर्वी-सुते किं त्वं जल्पसि जाल्म रे मुहुरिह प्रीतिर्भ-वेन्नैव मे ॥ ३१ ॥

य इति ॥ ननु उर्वीसुते! हे सीते! यः कितवस्तुतेः कितवानां वञ्चकानां असत्यैः प्रियवचनैः प्रतार्य जनहृदयं वशी-कुर्वतामित्यर्थः । "कितवो धूर्तवन्मत्ते वञ्चके कनकाह्वये" इति विश्वः । स्तुतेः तत्कर्तृकस्तोत्रस्य विषयतां लक्ष्यतां प्राप्तः अयं महावीर इति तैः स्तूयमान इत्यर्थः । इमं रामं क्षितितले धीराः धैर्यशालिनः शूरा इति यावत् । प्रकृत्या तु निसर्गेणैव "तु स्याद्भेदेऽवधारणे" इत्यमरः । परमत्यन्तं सर्वेभ्यः अभीतिकरे-भ्योपीत्यर्थः । चकितं भीतं "भीत्रार्थानां भयहेतुः" इत्यपादा-नत्वात् पञ्चमी । समाचक्षते आहुः । कितवानां वचसः अविश्वस-नीयत्वेन तैः स्तुतेऽपि रामे कस्तावदुत्कर्षः? वस्तुतस्तु तं नि-सर्गभीरुमेव मन्यन्तेऽस्मादृशो वीरा इत्यर्थः । ईदृक्षे निसर्गभीरा-वित्यर्थः । अहिते निसर्गभीरुत्वेन अहितकरे तव महावीरोचिताया इति भावः । प्रीतिः युज्यते किम्? न युज्यत इत्यर्थः । अतो महावीरे मयि प्रीतिं कुरुष्वेति भावः ॥

सीता प्रत्याह—

रे जाल्म असमीक्ष्यकारिन्! "जाल्मोऽसमीक्ष्यकारी स्यात्" इत्यमरः । त्वं मुहुः असकृत् किं किमर्थं जल्पसि? मा जल्पे-

त्यर्थः । इह तव जल्पने मे प्रीतिरादरः न भवेदेव तव ज ल्पनमसंशयं मे प्रीतिकरं न भवतीत्यर्थः ॥

प्रत्युक्तिगूढार्थस्तु—

रे जाल्म! त्वं मुहुः किं किवर्णं जल्पसि इह किवर्णे मे प्रीतिः न भवेदेव । किवर्णं परित्यज्य वद तत्तु मे प्रीतिकरमित्यर्थः ॥ एवं च—

यः प्राप्तस्तव स्तुतेर्विषयतां रामं प्रकृत्या त्विमं
सर्वेभ्यश्च तं परं क्षितितले धीरास्समाचक्षते ॥
ईदृक्षे ननु युज्यते महिते प्रीतिस्तवोर्वीसुते ।

इति फलितम् ॥ उर्वीसुते! यः तव स्तुतेः विषयतां प्राप्तः तमिमं सादरं त्वया तोष्टूयमानमित्यर्थः । रामं क्षितितले धीराः बुधाः तत्त्वज्ञा इति यावत् । "धीरो धैर्यान्विते स्वैरे बुधे क्लीबं तु कुंकुमे" इति कोशः । प्रकृत्या तु स्वभावेनैव सर्वेभ्यश्च परमुत्कृष्टं समाचक्षते । न केवलं त्वया तोष्टूयते स रामः अपि तु तत्त्वज्ञैरखिलैरपि सर्वोत्कृष्टः परिकीर्त्यत इत्यर्थः । ईदृक्षे तत्त्वविद्भिस्सर्वोत्कृष्टतया परिकीर्त्यमान इत्यर्थः । महिते जगत्पूजिते तव प्रीतिः युज्यते ननु । अत्र पक्षे नन्वित्येतदनुनये । च्युतविताक्षरमिदम् ॥ ३९ ॥

**उद्गाढप्रभयाऽऽवृतानि समरे घोरे दशास्यानि**
**मे हन्त्वैतन्नितरां प्रसन्नमनिशं वैदेहि चित्तं च मे ॥**

दोस्स्तम्भा न हि संभवज्जयवधूलब्धिप्रमत्ता इमे
नन्वत्रानुचितं तव प्रकथनं जानामि रक्षोऽधम॥४०

उद्गाढेति ॥ वैदेहि! विदेहस्य अपत्यं स्त्री वैदेही तस्याः स्संबुद्धिः सीते! घोरे भयंकरे समरे युद्धे मे दश आस्यानि मुखानि उद्गाढप्रभया उद्गाढया निर्भरया "अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम्" इत्यमरः । प्रभया आवृतानि भवन्तीति शेषः । एतत् मे चित्तं च अनिशं सर्वकालं नितरामत्यन्तं प्रसन्नं प्रसादयुक्तं भवतीति शेषः । हन्तेति हर्षे । ममाखिलानां मुखानां कान्तिमत्त्वं मे चेतसः प्रसन्नत्वं च मम अन्येषां च हर्षकरमित्यर्थः । अत्रोभयत्र कारणमाह—हि यस्मात्कारणात् इमे परिदृश्यमानाः मे इत्यनुषज्यते । दोस्स्तम्भाः दोषः भुजाः स्तम्भा इव दोस्स्तम्भाः स्तम्भवत् दीर्घाः दृढाश्च भुजा इत्यर्थः । विंशतिसंख्याकत्वाभिप्रायेण दोस्स्तम्भा इति बहुवचनम् ॥

काञ्चनाङ्गदसन्नद्धौ ददर्श स महात्मनः ।
निक्षिप्तौ राक्षसेन्द्रस्य भुजाविन्द्रध्वजोपमौ ॥
उत्तमस्त्रीविमृदितौ गन्धोत्तमनिषेवितौ ।
यक्षपन्नगगन्धर्वदेवदानवराविणौ ॥
ददर्श स कपिस्तस्य बाहू शयनसंस्थितौ ।
मन्दरस्यान्तरे सुप्तौ महाही रुषिताविव ॥
ताभ्यां स परिपूर्णाभ्यां भुजाभ्यां राक्षसेश्वरः ।
शुशुभेऽचलसंकाशः शृङ्गाभ्यामिव मन्दरः ॥

इति सुन्दरकाण्डे अन्यत्र च रावणस्य द्विभुजत्वेन वर्णित-त्वात् कथमिह बहुभुजत्वमुक्तमिति न शङ्क्यम् ॥

**बाहुभिर्बद्धकेयूरैश्चन्दनोत्तमरूषितैः ।**
**भ्राजमानाङ्गदैः पीनैः पञ्चशीर्षैरिवोरगैः ॥**

इति युद्धकाण्डे एकोनपञ्चाशे सर्गे,

**दशास्यो विंशतिभुजः प्रगृहीतशरासनः ।**
**अदृश्यत दशग्रीवो मैनाक इव पर्वतः ॥**

इति तत्रैव त्र्युत्तरशततमे सर्गे,

**विंशद्भुजं दशग्रीवं दर्शनीयपरिच्छदम् ।**
**विशालवक्षसं वीरं राजलक्षणशोभितम् ॥**

इत्यरण्यकाण्डे द्वात्रिंशे सर्गे च विंशतिभुजत्वेनैव वर्णि-तत्वात् । क्वचित् द्विभुजत्वेन वर्णनं तु रावणस्य कामरूपत्वा-द्बोध्यमिति दिक् । संभवज्जयवधूलब्धिप्रमत्ताः संभवन्ती जयवध्वाः जयलक्ष्म्याः या लब्धिर्लाभः तस्याः प्रमत्ताः अनवधानाः "**जुगु-प्साविरामप्रमादार्थानामुपसंख्यानम्**" इति पञ्चमी । न नभवन्ति जयलक्ष्मीलाभे अतिलाघववद्बाणप्रयोगादिना जागरूका एवेत्यर्थः ॥

**सीता प्रत्याह—**

ननु रक्षोऽधम! अत्र स्त्रिया मम समीप इत्यर्थः । तव प्रकथनं प्रकर्षेण कथनं आत्मश्लाघनमित्यर्थः । अनुचितं अयोग्यं सत् जानामि । प्रतापशाली पुरुषः स्त्रिया अग्रे आत्मानं न

श्लाघते यदि त्वं प्रतापशाली प्रदर्शय मे पत्युरग्रे तव प्रतापमिति भावः ॥

प्रत्युक्तिगूढार्थस्तु—

ननु रक्षोऽधम! अत्र अस्यां तव वाचीत्यर्थः । प्रकथनं प्रस्य प्रवर्णस्य कथनं वचनं अनुचितं जानामि प्रवर्णं विहाय यदिकथ्यते तदा तवेयं वाक् उचितैव स्यादित्यर्थः ॥ एवं च—

उद्गाढभयावृतानि समरे घोरे दशास्यानि मे ।
हन्तैतन्नितरां सन्नमनिशं वैदेहि चित्तं च मे ॥
दोस्स्तम्भा न हि संभवज्जयवधूलब्धिमत्ता इमे ॥

इति कथ्यतामिति फलितम् ॥ वैदेहि! घोरे समरे मे दश आस्यानि न त्वेकं द्वे वा दशाप्यास्यानीत्यर्थः । उद्गाढभयावृतानि अधिकभयावेष्टितानि अतिभयसूचकानीत्यर्थः । मे एतत् चित्तं च अनिशं नितरां सन्नं भग्नं भग्नोत्साहमित्यर्थः । सादितेः कर्तरि क्तः । **"नावं सन्नामिवार्णवे । सन्नामिव महाकीर्तिं"** इति रामायणे प्रयोगश्च । हन्तेति खेदे । अत्र हेतुमाह—हि यस्मात् इमे परिदृश्यमानाः मे इति पूर्ववदनुषज्यते । दोस्स्तम्भाः स्तम्भः जडीभावः **"स्तम्भौ स्थूणाजडीभावौ"** इत्यमरः । स एषामस्तीति स्तम्भाः अर्श आदित्वादच् । यद्वा स्तभ्नन्तीति स्तम्भाः पचाद्यच् । जडा इति यावत् । स्तम्भाश्च ते दोषश्च दोस्स्तम्भाः **'कुत्सितानि कुत्सनैः'** इत्यनेन वैयाकरणखसूचिवत्

समासः । कार्यालसत्वात् केवलभारभूता भुजा इत्यर्थः । संभवज्ज-यवधूलब्धिमत्ताः. लब्धिरेषामस्तीति लब्धिमन्तः तेषां भावस्तत्ता लाभ इत्यर्थः । संभवन्ती जयवध्वाः लब्धिमत्ता येषां ते तथोक्ताः । न नभवन्ति अलब्धजयश्रीका भवन्तीत्यर्थः । कुण्ठानां ममैषां भुजानां कथं जयलाभः? जयस्यालाभे कथं मम मुखेषु निर्भयता? कथं वा मे मनसश्च अविषण्णत्वं संपद्यत् इति भावः? । इदं च च्यावितांक्षरम् ॥ ४० ॥

**श्लाघ्येष्वायोधनेषु द्रुतविशमितविक्रान्तवैरिप्रतापः दिव्यास्त्राणां प्रयोगादयि धरणिसुते सुष्ठु संमानितोसौ ॥ केनाहं नावबुद्धस्समहितचरितो ह्येष इत्यत्र लोके पापिन् जल्पात्र मोदो भवति किमसुरभ्रष्ट ते जल्पनान्मे ॥ ४१ ॥**

**श्लाघ्येष्विति** ॥ अयि धरणिसुते! हे सीते! श्लाघ्येषु सकलैरभिनन्दनीयेषु न तु साधारणेष्वित्यर्थः । आयोधनेषु युद्धेषु "**युद्धमायोधनं जन्यम्**" इत्यमरः । दिव्यास्त्राणां प्रयोगात् हेतोः द्रुतविशमितविक्रान्तवैरिप्रतापः द्रुतं क्षिप्रं "**लघु क्षिप्रमरं द्रुतम्**" इत्यमरः । विशमितः विशेषेण शान्तिं गमितः ये विक्रान्ताश्शूराः "**शूरो वीरश्च विक्रान्तः**" इत्यमरः । वैरिणश्शात्रवः तेषां प्रतापः पराक्रमो येन स तथोक्तः । सहसा पराजितवीरवर्ग इत्यर्थः । अत एव सुष्ठु सम्यक् संमानितः बहुमानितः असौ

परिदृश्यमानः अहम् । अत्र लोके एषः रावणः समहितचरितो हि महितैर्जगन्मानितैः चरितैर्वीरजयादिरूपैः सह वर्तत इति तथोक्तः खलु इति केन नावबुद्धः? सर्वैस्तथाविधो बुद्ध एवेत्यर्थः ॥

सीता प्रत्याह—

पापिन्! असुरभ्रष्ट! राक्षसाधम! अत्र ममाग्रे जल्प स्वच्छन्दं प्रलपेत्यर्थः । ते जल्पनात् मे मम मोदः परितोषः भवति किम्? न भवत्येवेत्यर्थः । अतस्ते जल्पनं व्यर्थमिति भावः ॥

प्रत्युक्तिगूढार्थस्तु—

पापिन्! असुरभ्रष्ट! जल्प अत्र त्वयैवं जल्पिते वचसि मः मकारः दः दकारः भवति । अत्र योयो मकारो वर्तते स सर्वः दकारत्वेन मया ज्ञायत इत्यर्थः । ते जल्पनात् मे किम्? तवेदं वचः मम न किंचिदपि मनःपीडनं कुर्यादित्यर्थः ॥

एवं च—

श्लाघ्येष्वायोधनेषु द्रुतविशदितविक्रान्तवैरिप्रतापः
दिव्यास्त्राणां प्रयोगादयि धरणिसुते सुष्ठु संदानितोसौ ॥
केनाहं नावबुद्धस्सदहितचरितो ह्येष इत्यत्र लोके ॥

इति फलितम् ॥ अयि धरणिसुते! श्लाघ्येष्वायोधनेषु दिव्यास्त्राणां परकीयानामिति यावत् । प्रयोगात् प्रकर्षेण योगस्संबन्धः तस्मात् तं प्राप्येत्यर्थः । ल्यब्लोपे पञ्चमी । परकृतदिव्यास्त्र प्रयोगविषयीभूत इति यावत् । द्रुतविशदितविक्रान्तवैरिप्रतापः द्रुतं

विशदितः प्रकाशितः विक्रान्तानां दिव्यास्त्रप्रयोगातिकुशलानां वैरिणां प्रतापः येन स तथोक्तः स्वस्य दुर्बलतया वैरिभिस्स-हसा पराजित इत्यर्थः । अत एव सुष्ठु दृढं संदानितः बद्धः "बद्धे संदानितं मूतम्" इत्यमरः । वैरिभिर्निगृहीत इत्यर्थः । असौ अहं अत्र लोके "एषः रावणः सदहितचारितः सतां महावीर-तया अभ्यर्हितानां अहितमनिष्टं चरितं रणपराजयादिरूपं यस्य स तथोक्तः" इति केन नावबुद्धः ? सर्वैरपि बुद्ध एवेत्यर्थः । प्रति-दत्ताक्षरमिदं चित्रम् ॥ ४१ ॥

**विभास्वत्सद्रक्षःप्रमथितयशोदर्पविभवः**
**शुभास्ये यो भूयोविमतरण एवास्ति विपिने ।**
**गुणैस्संपन्नोसाविति ननु मतः केन भुवने**
**तवैष व्याहारो मम तु न मतो भाति कुमते ॥**

**विभास्वदिति** ॥ शुभास्ये सुमुखि! यः रामः विपिने वने विभास्वत्सद्रक्षःप्रमथितयशोदर्पविभवः विभास्वन्ति प्रतापेन समुछ्-सन्ति अत एव सन्ति अभ्यर्हितानि यानि रक्षांसि तैः प्रम-थितः नाशितः यशोदर्पयोः कीर्तिगर्वयोः विभवः अतिशयः यस्य स तथोक्तः । प्रमथित इत्यत्र प्रपूर्वकस्य मथ्नातेर्नाशार्थकत्वम् । "उद्वासनप्रमथनक्रथनोज्जासनानि च" इत्यमरकोशात् । अत एव भूयोविमतरण एव भूयः भूरि यथा तथा विमतः अनभि-मतः रणः युद्धं यस्य स तथोक्तः अस्ति । महाराक्षसाभिभूततया

युद्धोद्यमपराङ्मुख एवेत्यर्थः । एवशब्दः युद्धाभिमुख्यसंभावनायाः आत्यन्तिकनिरासाय प्रयुक्तः । अन्यथा एतावता कालेन मामभियायादेवेति भावः । स इति शेषः । असौ रामः "गुणैश्शौर्यादिभिः संपन्नः युक्तः" इति भुवने केन ननु मतः विदितः न केनापि विदित इत्यर्थः । नन्विति प्रश्ने ॥

**सीता प्रत्याह—**

कुमते दुर्बुद्धे! तव एषः व्याहारः उक्तिः मम तु मतः इष्टः न भाति त्वदुक्तमिदं मत्पतिनिन्दनं दुरात्मनस्तव मनःप्रियं स्यात् न तु पतिव्रताया ममेति तुशब्दस्यार्थः ॥

**प्रत्युक्तिगूढार्थस्तु—**

कुमते! तव एषः व्याहारः मम तु मतः मवर्णात् पञ्चम्यास्तसिल् हेतौ पञ्चमी मवर्णयुक्तत्वेनेत्यर्थः । न भाति न शोभते मवर्णरहितं सत् शोभत एवेत्यर्थः । अतो मवर्णं परित्यज्य वदेति भवाः ॥ एवं च—

**विभास्वत्सद्रक्षः प्रथितयशोदर्पविभवः ।**
**शुभास्ये यो भूयोवितरण एवास्ति विपिने ॥**
**गुणैस्संपन्नोसाविति न नुतः केन भुवने ॥**

इति वदेति फलितम् ॥

शुभास्ये! यः विपिने विपिनेऽपीत्यर्थः अप्यर्थो गम्यः । विभास्वत्सद्रक्षः विभास्वती सतां रक्षा संरक्षणं यस्मिन् स तथोक्तः सज्जनरक्षणविचक्षण इत्यर्थः । प्रथितयशोदर्पविभवः प्रथितः प्रसिद्धः

यशोदर्पविभवो यस्य स तथोक्तः विपिनेऽपि महायशोदर्पविभवत्वेन श्लाघ्यमान इत्यर्थः । भूयोवितरण एव भूयः अतिशयेन बहु वितरणं दानं यस्य स तथोक्तः अस्ति । विपिनेऽपि महादानशौण्ड एवेत्यर्थः । एवशब्दः कार्पण्यसंभावनायाः आत्यन्तिक निरासायेति भावः । सः असौ रामः "गुणैश्शौर्यधैर्यौदार्यादिभिः संपन्नः" इति भुवने केन न नुतः न स्तुतः? नौतेः कर्मणिक्तः । सर्वैरपि संनुत एवेत्यर्थः । च्याविताक्षरमिदम् ॥४२॥

**नदुष्टप्रज्ञोऽन्यः क इह भुवने मेऽस्ति सदृशः**
**क आस्ते मत्तुल्यो जनकतनये स्वादुहितवाक् ।**
**न वाक्कस्यास्वाद्या भवति सुदुरापस्य ननु मे**
**तवास्मिन् कः प्रीतिं कितव कुरुते दुर्वचसि रे ॥**

नेति ॥ जनकतनये! इह भुवने भुवि मे सदृशः नदुष्टप्रज्ञः दुष्टा दोषयुक्ता सा न भवतीति नदुष्टा अतिकुशलेति यावत् नशब्देन सह समासः नदुष्टा प्रज्ञा धीः यस्य स तथोक्तः अन्यः कः अस्ति? महाप्रज्ञो मदन्यो न कोप्यस्तीत्यर्थः । मत्तुल्यः स्वादुहितवाक् स्वादुः प्रिया हिता सत्या वाक् यस्य सः तथोक्तः "**सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् । प्रियं च नानृतं ब्रूयादेष धर्मस्सनातनः**" ॥ इत्युक्तरीत्या सूनृतवचनः मदन्यः न कोप्यस्तीत्यर्थः । सुदुरापस्य अतिदुर्लभस्य अत्युच्छ्रितराक्षसचक्रवर्तिपदत्वात् असुलभस्येत्यर्थः । मे वाक् कस्य ननु नन्विति

प्रश्ने आस्वाद्या आस्वादयितुं योग्या श्रव्येति यावत् न भवति निरवद्यप्रज्ञस्य मम वाक् स्वादुहितत्वेन श्रोतुमसुलभत्वेन च सर्वेषामपि सादरं श्रव्या भवत्येवेत्यर्थः ॥

सीता प्रत्याह—

रे कितव! वञ्चक! तव अस्मिन् दुर्वचसि असत्यत्वेन दुष्टे वचसि कः प्रीतिं कुरुते? न कोपि जनो वञ्चकस्य तवेदं दुर्वचनमाद्रियत इत्यर्थः ॥

प्रत्युक्तिगूढार्थस्तु—

रे कितव! तव अस्मिन् नदुष्टप्रज्ञ इत्यादौ वचसि कः दुः दुवर्णः प्रीतिं कुरुते? नैकोपि दुवर्णः प्रीतिं कुरुत इत्यर्थः। अतस्सर्वान् दुवर्णान् परित्यज्य वद अदुवर्णमेतद्वचः सर्वेषामपि प्रीतिकरं भवत्येवेत्यर्थः ॥

एवं च—

नष्टप्रज्ञोऽन्यः क इह भुवने मेऽस्ति सदृशः
क आस्ते मत्तुल्यो जनकतनये स्वाहितवाक्।
न वाक्कस्यास्वाद्या भवति सुरापस्य ननु मे ॥

इति वदेति फलितम् ॥

जनकतनये! इह भुवने मे सदृशः नष्टप्रज्ञः प्रज्ञाहीनः कः अस्ति? न कोप्यस्तीत्यर्थः। प्रज्ञावत्त्वे परपीडनपरदारग्रहणादिपातकपरः कथं स्यामिति भावः। मत्तुल्यः स्वाहितवाक् स्वस्य अहिताः अवाच्यत्वेन अनिष्टकर्यः वाचो यस्य स तथोक्तः कः

आस्ते? नष्टप्रज्ञस्य स्वाहितवाक्त्वमुचितमेवेति भावः। सुरापस्य सुरां पिबतीति सुरापः तस्य 'गापोष्टक्' इति टक्। मे वाक् कस्य ननु अस्वाद्या स्वादयितुं योग्या स्वाद्या सा न भवतीत्यस्वाद्या अश्रव्येति यावत् न भवति। सुरापायिनो वाचस्सर्वेषामप्यनादरणीया एवेत्यर्थः। इदं च च्याविताक्षरम् ॥ ४३॥

**सदा संपन्नास्ते मम भटवरास्संगरभयं-**
**करात्मानस्सीते बहुविजितसंक्रन्दनमुखाः।**
**प्रयोगे बाणानां समरभुवि संदेहरहिताः**
**न किं जानामीदं खलु तव वचोसंगतमिति ॥४४॥**

स्वभटपराक्रमप्रशंसनद्वारा स्वपराक्रमं प्रशंसति सदेत्यादिना—सदेति ॥ सीते! सदा न तु कदाचिदित्यर्थः। संपन्नाः धैर्यस्थैर्यादिगुणसंपदं प्राप्ताः संगरभयंकरात्मानः संगरे युद्धे "अथ प्रतिज्ञाजिसंविदापत्सु संगरः" इत्यमरः। भयंकरः आत्मा मूर्तिर्येषां ते महातेजश्शालिन इत्यर्थः। अत एव बहुविजितसंक्रन्दनमुखाः संक्रन्दन इन्द्रो मुखं येषां ते संक्रन्दनमुखाः देवाः बहु अत्यन्तं विजिताः निर्जिताः संक्रन्दनमुखाः यैस्ते तथोक्ताः असकृदिन्द्रादीनां जेतार इत्यर्थः। ते प्रसिद्धाः मम भटवराः योधश्रेष्ठाः "भटा योधाश्च योद्धारः" इत्यमरः। समरभुवि रणाङ्गणे बाणानां प्रयोगे मोक्षणे विषये संदेहरहिताः संदेहेन "अयं वा प्रयोज्यः अयं वा प्रयोज्यः" इत्याकार-

केण संशयेन रहिताः हीनाः धनुर्विद्याविशारदा इत्यर्थः वर्तन्त इति शेषः। एतादृशां धुरि रामः कियानिति, मम भटानामेव ईदृशप्रतापशालित्वे मम प्रतापोत्कर्षः किमु वक्तव्य इति च भावः॥

**सीता प्रत्याह—**

खल! तव इदं वचः असंगतमनुपपन्नं असत्यार्थप्रतिपादकत्वादिति शेषः इति न जानामि किम्? जानाम्येवेत्यर्थः॥

**प्रत्युक्तिगूढार्थस्तु—**

खल! तव इदं "**सदासंपन्नास्ते**" इत्यादिकं असंगतं—समं समित्याकारकं शब्दं गतं प्राप्तं संगतं तन्न भवतीत्यसंगतं संशब्दरहितमिति यावत् इति न जानामि किम्? जानाम्येवेत्यर्थः। अतस्संशब्दरहितं वदेति भावः॥

एवं च—

**सदाऽऽपन्नास्ते मम भटवरा गरभयं-**
**करात्मानस्सीते वहुविजितक्रन्दनमुखाः॥**
**प्रयोगे बाणानां समरभुवि देहरहिताः॥**

इति वदेति फलितम्॥

सीते! सदा आपन्नाः आपत्प्राप्ताः अतिदुर्बलत्वादिति भावः। "**आपन्न आपत्प्राप्तस्स्यात्**" इत्यमरः। गरभयंकरात्मानः गरः विषमिव भयंकरः दारुणः आत्मा मनः येषां ते अतिक्रूरमनस इत्यर्थः राक्षसत्वादिति भावः। वहुविजितक्रन्दनमुखाः ब-

हुभिर्विजिताः बहुविजिताः अत एव क्रन्दति रोदितीति क्रन्दनं कर्तरि ल्युः तादृशं मुखं येषां ते, क्रन्दनं रोदनं तेन युक्तं मुखं येषां ते इति वा बहुविजिताश्च ते क्रन्दनमुखाश्चेति तादृशाः बहुभिर्निर्जितत्वात् रुदन्मुखा इत्यर्थः । ते तथाविधत्वेन प्रसिद्धाः मम भटवराः समरभुवि बाणानां प्रयोगे सति शत्रुभिर्बाणेषु प्रयुक्तेष्वित्यर्थः । देहरहिताः मृताः भवन्तीति शेषः । भटवरा इत्यत्र वरशब्देन मम भटवराणामेव एवंविधत्वे साधारणानां भटानां विषये किमु वक्तव्यमिति व्यज्यते । इदं च च्यावितात्क्षरम् ॥ ४४ ॥

**अजस्रं मानी च व्यवसितपरः को मदपरः**
**महीजे मान्यश्रीश्रयणमुदितश्चाहमिव कः ।**
**मदन्यः कोस्त्युद्यद्रुचिरकुसुमाराध्यतनुरुक्**
**दुरालापिन् पापिन् प्रलप किमपि त्वं विसृज**
**माम् ॥४५॥**

**अजस्रमिति ।** महीजे सीते! अजस्रं संततं न तु कदाचिदित्यर्थः । मानी चित्तसमुन्नतिमान् "**मानश्चित्तसमुन्नतिः**" इत्यमरः । चशब्दो भिन्नक्रमः समुच्चये । व्यवसितपरः व्यवसितेषु उद्योगेषु पर आसक्तश्च सर्वदा मानानुगुणं उद्योगं कुर्वाण इत्यर्थः । मत् अपरः कः? अस्तीति सर्वत्रानुषज्यते । अहमिव मान्यश्रीश्रयणमुदितश्च मान्यायाः जगत्पूज्यायाः श्रियः साम्राज्यलक्ष्म्याः श्रयणेन तत्कर्तृकसेवया मुदितः हृष्टश्च कः? "उद्यो-

**गिनं पुरुषसिंहमुपैति लक्ष्मीः"** इति न्यायेन स्वयं सन्ततोद्योगतया लक्ष्मीवाछम्यमुपगतः रामस्तु अलसतया नित्यदरिद्र इति भावः। न केवलं स्वस्मिन् लक्ष्मीवाछम्यं लोकातिशायि सौन्दर्यं चास्तीत्याह उद्यदित्यादिना—उद्यद्रुचिरकुसुमाराध्यतनुरुक् उद्यती प्रसरन्ती रुचिरैर्मनोहरैः कुसुमैः चाम्पेयमल्लिकादिभिः आराध्यायाः आराधितुं योग्यायाः अतिकमनीयाया इत्यर्थः। तनोर्देहस्य रुक् द्युतिः यस्य स तथोक्तः **"स्युः प्रभा रुक् रुचिस्त्विड्भा"** इत्यमरः। मत् अन्यः कः अस्ति? न कोप्यस्तीत्यर्थः। रामस्तु निसर्गेण, वने वातातपादिक्लेशवशत्वेन च विवर्णगात्र इति। अतस्तादृशं राममनादृत्य संपत्सौन्दर्यशालिनं मां वृणीष्वेति च भावः॥

**सीता प्रत्याह—**

दुरालापिन्! दुष्टो य आलाप आभाषणं सोस्यास्तीति तस्य संबुद्धिः पापिन्! त्वं किमपि यद्यद्रोचते तत्सर्वमपीत्यर्थः प्रलप। मां विसृज श्रवणनिर्बन्धात् विमुञ्च। पापिनस्ते दुर्वचनमुचितं तत्प्रतिफलं त्वमचिरादेव विन्देः मम तु तन्न श्रव्यमिति भावः॥

**प्रत्युक्तिगूढार्थस्तु—**

दुरालापिन्। पापिन्! त्वं मां "मा" इत्याकारकं वर्णं विसृज। अत्र वचसीति शेषः। किमपि मावर्णव्यतिरिक्तं सर्वमपीत्यर्थः प्रलप। तन्मे प्रियमिति भावः॥

एवं च—

**अजस्रं नीचव्यवसितपरः को मदपरः**

**महीजेऽन्यश्रीश्रयणमुदितश्चाहमिव कः ।**

**मदन्यः कोस्त्युद्यद्रुचिरकुसुराध्यतनुरुक् ॥**

इति फलितम् ।

महीजे! अजस्रं नीचव्यवसितपरः मत् अपरः कः? मादृशो नीचकार्यासक्तः न कोप्यस्तीत्यर्थः अहमिव अन्यश्रीश्रयणमुदितश्च अन्येषां श्रियः दारधनादिकायाः श्रयणेन आक्रमणेन मुदितस्संतुष्टश्च । परदारादिग्रहणेन आत्मानं कृतार्थं मन्यमानश्चेत्यर्थः कः? उद्यद्रुचिरकुसुराध्यतनुरुक् उद्यती प्रतिक्षणं प्रभवन्ती रुचिरया अभिमतया स्वादकर्या वा कुसुरया लोक निन्दितत्वेन कुत्सितया मदिरया लक्षणया तत्पानेनेत्यर्थः अधि अधिका अतनोः कामस्य रुक् उपतापः यस्य स तथोक्तः "**स्त्री रुग्रुजा चोपतापरोगव्याधिगदामयाः**" इत्यमरः । मत् अन्यः कः अस्ति? मादृक्षः सुरापायी अतिकामी च न कोप्यस्तीत्यर्थः । सुरापानं तु कामोद्दीपकमिति प्रसिद्धम् । अयमेव विषयः माघकाव्ये दशमे सर्गे बहुधा प्रपञ्चितः । अध्यतनुरुगित्यत्र अधिशब्दस्य अधिकार्थकत्वम् । "**एतस्मिन्नधिकपयश्श्रियं वहन्त्यः, इयं महेन्द्रप्रभृतीनधिश्रियः**" इत्यादेः प्रयोगस्य दर्शनात् । अत ईदृशो दुराचारोऽहमचिरादेव नाशयितव्य इति भावः । इदं च च्यावितक्षरम् ॥ ४९ ॥

**तनूजा मे तत्तद्बहुसमितिरङ्गाततरयाः**
**तथारीत्या युक्तास्सुतनु सचिवा मे च सकलाः ।**
**अतिख्यातास्सद्यो युधि मम मनोरञ्जनकृता-**
**वलं पापिन् सज्जो भव झडिति रे भङ्गम-**
**यितुम् ॥ ४६ ॥**

**तनूजा** इति ॥ सुतनु मङ्गळाङ्गि! तत्तद्बहुसमितिरङ्गातत-रयाः तेषुतेषु प्रसिद्धेष्वित्यर्थः बहुषु सामितरङ्गेषु युद्धाङ्गणेषु आततः विस्तृतः रयः रंहः शरमोक्षणादिकार्यलाघवं येस्ते । "**रंहस्तरसी तु रयस्स्यदः**" इत्यमरः । मे मम तनूजाः पुत्राः तथारीत्या तादृशप्रकारेण युक्ताः यथा मे तनूजाः महाकरला-घवास्तथास्थिता इत्यर्थः । मे सकलाः सचिवाश्च मन्त्रिणोपि युधि समरे सद्यः प्रवेशोत्तरक्षणमेवेत्यर्थः । मम मनोरञ्जनकृतौ हृदयो-ल्लासनविधौ महाप्रतापप्रदर्शनेनेति भावः । अतिख्याता ननु सुप्र-सिद्धा एव । नन्वित्यवधारणे । तादृशां महाप्रतापशालिनां पुत्रा-णाममात्यानां च साहाय्यं प्राप्तवता मया सह को वा युध्ये-तेति भावः ॥

**सीता प्रत्याह—**

रे पापिन्! अलं एवं निरर्थकं मावादीरित्यर्थः । अलमिति निवारणे । "**अलं भूषणपर्याप्तिशक्तिवारणवाचकम्**" इत्यमरः । झडिति अचिरात् भङ्गं नाशं रामादित्यर्थः । अयितुं प्राप्तुं सज्जः

सिद्धः भव यावच्छ्रीरामस्समागत्य दुरात्मानं त्वां हन्यात् तावदेव त्वं पुत्रकलत्रादिषु कर्तव्यं चरमं संभाषणादिकं कुरुष्वेति भावः ॥

**प्रत्युक्तिगूढार्थस्तु—**

रे पापिन्! अलं एवं मावादीरित्यर्थः। तर्हि कथं वाच्यमिति चेदाह झडितीति—

रे रेफे भं भकारं गमयितुं योजयितुं झडिति सज्जो भव बुद्धिसन्नाहं कुरुष्व रेफस्थाने भं वदेत्यर्थः ॥

एवं च—

तनूजा मे तत्तद्बहुसमितिभङ्गाततभयाः
तथाभीत्या युक्तास्सुतनु सचिवा मे च सकलाः।
अतिख्यातास्सद्यो युधि मम मनोभञ्जनकृतौ ॥

इति वदेति फलितम् ॥

सुतनु! तत्तद्बहुसमितिभङ्गाततभयाः तासुतासु बहुषु समितिषु यो भङ्गः पराजयः तेन हेतुना आततं विततं भयं यैस्ते युद्धेष्वसकृत् पराभूतत्वात् अतितरां बिभ्यत इत्यर्थः। तथाभीत्या तादृशेन भयेन युक्ताः यथा मे तनूजाः समरेष्वसकृत् पराजितत्वात् अत्यन्तं भीताः तथा भीता इत्यर्थः। मे सकलाः सचिवाश्च युधि सद्यः मम मनोभञ्जनकृतौ मनसः लक्षणया तदुत्साहस्येत्यर्थः भञ्जनस्य भङ्गस्य कृतौ विधाने अतिख्याता ननु ईदृशैः भीरुभिः पुत्रामात्यैः अन्वितस्य मम रणे न किमपि साहाय्यमिति सुप्रसिद्धमेवेति भावः। प्रतिदत्ताक्षरमिदं चित्रम् ॥४३॥

न मद्वत् काकुत्स्थस्समरविजयासादितयशाः
न तद्वत् लोकेऽहं सुमुखि विरसत्त्वं ननु गतः ।
अशेषा अप्याहुस्सुचरितलसत्संपदिति मां
वृथालापिन् रेऽलं कितव लप वा ते तदुचितम् ॥

नेति ॥ ननु सुमुखि! काकुत्स्थः रामः मद्वत् मया तुल्यं "तेन तुल्यं" इति वतिः । अहमिवेत्यर्थः । समरविजयासादितयशाः समरेषु यो विजयस्तेन हेतुना आसादितं लब्धं "लब्धं प्राप्तं विन्नं भावितमासादितं च भूतं च" इत्यमरः । यशः येन स तथोक्तः न । यथाऽहं समरेषु शत्रून् विजित्य महतीं कीर्तिं लब्धवानस्मि रामो न तथेत्यर्थः । अहं ईदृशः कीर्तिशालीत्यर्थः तद्वत् तेन तुल्यं स इवेत्यर्थः लोके विरसत्त्वं वैरस्यं गतः प्राप्तः न । विरसत्त्वमित्यत्र "अनचि च" इति तकारस्य द्वित्वम् । रामो यथा विरसः न तथाऽहमित्यर्थः । अशेषा अपि रसज्ञास्सर्वेऽपीत्यर्थः । मां सुचरितलसत्संपत् शोभनं चरितं यस्य स तथोक्तस्सुचरितः लसन्ती संपत् यस्य स तथोक्तः लसत्संपत् सुचरितश्चासौ लसत्संपच्चेति विशेषणोभयपदकर्मधारयसमासः । सुचरित्रो महाविभवश्चेत्यर्थः । सुचरितेन लसन्ती संपत् यस्य स तथोक्त इति वा । आहुः कथयन्ति ईदृशस्सच्चरितविभवः अहं क? तादृशो विरसो रामः क? उभयोर्महदन्तरमस्तीति भावः ॥

सीता प्रत्याह—

रे वृथालापिन्! वृथा व्यर्थं यथा तथा लपतीति वृथालापी तस्य संबुद्धिः। कितव धूर्त! अलं मुहुरेवं मा प्रलापीरित्यर्थः। वा अथवा लप प्रलप तत् प्रलपनं ते उचितं युक्तम्। वाचाटस्य तव प्रलपनं सहजमतो दुर्वारमिति भावः॥

प्रत्युक्तिगूढार्थस्तु—

वृथालापिन् कितव! रे रेफस्थाने लं लकारं लप वा वदैव अत्र वाशब्द एवार्थकः "**वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये**" इति विश्वकोशात्। रेफस्थाने लकारस्त्वयाऽवश्यं वक्तव्य इत्यर्थः। ते तत् त्वदीयं रेफस्थानापन्नलकारं वचः उचितमुपपन्नम्॥

एवं च—

**न मद्वत् काकुत्स्थस्समलविजयासादितयशाः**
**न तद्वल्लोकेऽहं सुमुखि विलसत्त्वं ननु गतः।**
**अशेषा अप्याहुस्सुचलितलसत्संपदिति माम्॥**

इति फलितम्।

ननु सुमुखि! काकुत्स्थः मद्वत् समलविजयासादितयशाः समलस्सकलङ्कः कूटयुद्धतः प्राप्त इत्यर्थः यो विजयस्तेन आसादितयशाः लब्धकीर्तिः न। रामः सहजप्रतापप्रदर्शनेन शत्रून् विजित्य कीर्तिमुपगत इत्यर्थः। अहं ईदृशस्समलविजयासादितयशा इति यावत् तद्वत् लोके विलसत्त्वं विलसतो भावः विलसत्त्वं

प्रकाशं गतः न। रामो यथा सहजप्रतापादिगुणैः प्रकाशते न तथाऽहं प्रकाशमान इत्यर्थः। अत्र पक्षे विलसत्त्वमित्यत्र तकारस्य द्वित्वं स्वत एव सिद्धम्। अशेषा अपि मां सुचलितलसत्संपत्–सुष्ठु चलितास्सुचलिताः गतप्राया इत्यर्थः लसत्संपदः यस्य स तथोक्तः इति आहुः। पुण्यशेषेण एतावन्तं कालं विलसिता अस्य रावणस्य संपदः पापपरिपाकेन अचिरादेव नङ्क्ष्यन्तीति सर्वे वदन्तीत्यर्थः। इदं च प्रतिदत्ताक्षरम्॥ ४७॥

**मुखालोकाद्दृश्ये सपदि सकलैस्साहसवहः**
**निगद्ये चाशेषैस्सहनमतिमान् रावण इति।**
**जनस्यास्मिंश्चेतो न विहरति कस्येदृशि मयि**
**प्रजल्पस्येवं रे निशिचर कुतो वेद्म्यहमिदम्॥**

**मुखालोकादिति**॥ सीते इत्यध्याहार्यम्। मुखालोकात् मुखानां आलोकात् दर्शनात् सपदि सकलैः साहसवहः वहतीति वहः साहसस्य वहः साहसीत्यर्थः। दृश्ये ज्ञाये मन्मुखदर्शनमात्रेणैव अयं महासाहसीति सर्वे मां जानन्तीत्यर्थः। मुखानि साहसित्वद्योतकानीति भावः। किं चेति चार्थः अशेषैः रावणः सहनमतिमान् सहने क्षमागुणे मतिः सहनमतिः साऽस्यास्तीति तथोक्तः इति निगद्ये रावणस्सहनशील इति सर्वे मां निगदन्तीत्यर्थः। परस्परविरुद्धत्वात् साहसक्षमे एकत्र न विद्येते मयि तु असाधारणतया ते वर्तेते अतोऽहमधृष्योऽभिगम्यश्चेति भावः। ईदृशि साहसक्षमादिगुणशालि-

नीत्यर्थः । मयि कस्य जनस्य चेतः न विहरति न रमते? सर्वेषा-मपि चेतो रमेत एवेत्यर्थः । अथापि ते मनः मयि कुतो न रमत इति भावः ॥

सीता प्रत्याह—

रे निशिचर! नीचराक्षस! कुतः कस्मात् एवं प्रजल्पसि? अहं इदं ते प्रजल्पनं वेद्मि जानामि अतो मा प्रजल्पीरिति भावः ॥

प्रत्युक्तिगूढार्थस्तु—

रे निशिचर! एवं हवर्णयुक्तत्वेनेत्यर्थः । कुतः प्रजल्पसि? इदं ते प्रजल्पनं अहं—न विद्यते हः हवर्णः यस्मिंस्तत् हवर्णरहितं वेद्मि अतः हवर्णरहितत्वेन जल्पेति भावः ॥

एवं च—

मुखालोकाद्दृश्ये सपदि सकलैस्सासवः ।
निगद्ये चाशेषैस्स न मतिमान् रावण इति ॥
जनस्यास्मिंश्चेतो न विरति कस्येदृशि मयि ॥

इति फलितम् ।

मुखालोकात् सपदि सकलैः सासवः आसवेन मद्येन सह वर्तत इति सासवः पीतासव इत्यर्थः । दृश्ये मुखावलोकनमात्रेणैव नेत्रारुण्यादिभिः अयमाकलितसुरापान इति सर्वे मां विदन्तीत्यर्थः । किं च अशेषैः "सः दुष्टत्वेन प्रसिद्धः रावणः मतिमान बुद्धियुक्तः न" इति निगद्ये सर्वे मां बुद्धिहीनं निगद-

न्तीत्यर्थः । ईदृशि—मद्यपायिनि बुद्धिहीने चेत्यर्थः । मयि कस्य जनस्य चेतः विरति—विगता रतिः प्रीतिः यस्मात्तत् विरति प्रीतिरहितमित्यर्थः न? सर्वेषामपि चेतः प्रीतिरहितमेवेत्यर्थः "रतिः कामप्रियाप्रीत्योः" इति रत्नमाला । मद्यपायिनि बुद्धिहीने च कस्य वा मनो रज्येतेति भावः । च्युताविताक्षरमिदं चित्रम् ॥

**ईदृक्कोस्त्यपरो नितान्तमहसाऽभिख्येयनैजाकृतिः कश्चान्यो जगतीदृशोस्त्यविरतं युक्तो महत्या धिया । सद्यः प्रेमत एव हे जनकजे दृश्यो जनोऽयं त्वया किं जाल्मैवमरे प्रजल्पसि समं नो स्यादिदं ते वचः ॥ ४१ ॥**

ईदृगिति ॥ हे जनकजे! जगति ईदृक् ईदृशः मत्सदृश इत्यर्थः । नितान्तमहसा नितान्तेन महता महसा कान्त्या हेतुना अभिख्येयनैजाकृतिः अभिख्यातुं योग्या अभिख्येया निजैव नैजा । प्रज्ञादित्वात् स्वार्थे अण् । आकृतिः यस्य स तथोक्तः । अतिकान्तिमत्तया वर्णनीयस्वरूप इत्यर्थः । अपरः कः अस्ति? ईदृशः ईदृक्षः मत्सदृश इत्यर्थः । अविरतं अनवरतं महत्या श्लाघ्यया धिया बुद्ध्या युक्तश्च अन्यः कः अस्ति? न कोप्यस्तीत्यर्थः । अयं—अतिकान्त्युज्ज्वलतनुः सुधीश्चेत्यर्थः जनः अहमिति यावत् त्वया सद्यः अद्यैव प्रेमत एव प्रेम्णैव न तु अनादरेणेत्यर्थः । दृश्यः द्रष्टव्यः ईदृशं मामनादरेण द्रष्टुमनुचितम् । सादरं पश्येत्यर्थः ॥

**सीता प्रत्याह—**

अरे जाल्म! असमीक्ष्यकारिन्! एवं किं किमर्थं प्रजल्पसि? ते इदं वचः समं साधु "**सर्वसाधुसमानेषु समं स्यादभिधेयवत्**" इति विश्वः। नो स्यात् न भवेत् अतो मा जल्पीरित्यर्थः॥

**प्रत्युक्तिगूढार्थस्तु—**

अरे जाल्म! एवं—मवर्णवैशिष्ट्येन किं किमर्थं प्रजल्पसि? ते इदं ईदृगित्यादिकं वचः समं मेन मवर्णेन सह वर्तत इति समं मवर्णसाहितं नो स्यात् अतो मवर्णयुक्तं मा जल्पीः मवर्णं विना वदेत्यर्थः॥

एवं च—

**ईदृक्कोस्त्यपरो नितान्तहसाभिख्येयनैजाकृतिः**
**कश्चान्यो जगतीदृशोस्त्यविरतं युक्तो हत्याधिया।**
**सद्यः प्रेत एव हे जनकजे दृश्यो जनोऽयं त्वया॥**

इति फलितम्।

हे जनकजे! जगति ईदृक् मत्सदृशः नितान्तहसाभिख्येयनैजाकृतिः—नितान्तः अधिकः हसो हास्यं यस्मिन् कर्मणि तद्यथा भवति तथा अभिख्येया वाच्या नैजा अकृतिः दशमुख विंशतिभुजत्वेन लोकविलक्षणा यस्य स तथोक्तः अपरः कः अस्ति? ईदृशः मत्समः अविरतं हत्याधिया हत्यायां प्राणिहिंसायां विषये या धीस्तया युक्तश्च अन्यः कः अस्ति? न कोप्यस्तीत्यर्थः। अयं

लोकविलक्षणरूपः लोकहिंसकश्चेत्यर्थः । जनः त्वया सद्य एव अचिरादेव प्रेतः मृतस्सन् "परासुप्राप्तपञ्चत्वपरेतप्रेतसंस्थिताः" इत्यमरः । दृश्यः द्रष्टुं योग्यः लोकभीकररूपस्य लोकहिंसकस्य च मे अचिरादेव मरणमुचितमित्यर्थः । इदं च च्यावितक्षरम् ॥४९॥

**शृणु त्वं मे वाचं कलितनियमे संयतवच-**
**स्यहो तस्मिन् रामे सरुचिघनयात्रे भयवति ।**
**भृशं चेतोरागं सततमपि ते कर्तुमुचितं**
**मुहुर्योगो वाचीदृशि भवतु ते का मम हतिः ॥**

शृण्विति ॥ 'अहो' इति सीतासंबोधनम् । त्वं मे वाचं शृणु सावधानं परामृशेत्यर्थः । कलितनियमे कलितः प्राप्तः नियमः जटावल्कलधारित्वादिकं व्रतं येन स तथोक्तः "**नियमो व्रतमस्त्री**" इत्यमरः । संयतवचसि संयतानि निरुद्धानि वचांसि येन स तथोक्तः मौनव्रतधारित्वात् कृतवाङ्नियम इत्यर्थः । सरुचिघनयात्रे—रुच्या स्पृहया सह वर्तत इति सरुचिः साभिलाषा "**अभिष्वङ्गे स्पृहायां च गभस्तौ च रुचिः स्त्रियाम्**" इत्यमरः । घना निरन्तरा अनवरतेति यावत् यात्रा प्रयाणं यस्य तस्मिन् यात्रायां सरुचित्वं विषयतया बोध्यम् । अनिकेतनत्वेन नित्यं वनाद्वनं परिभ्रमतीत्यर्थः । भयवति—भयं सिंहशार्दूलादिभ्यः राक्षसेभ्यो वा साध्वसं तदस्यास्तीति भयवान् तस्मिन् भीरुत्वात् वने मुनिवेषेणापि जीवति वा न वेति शङ्कनीय इत्यर्थः । अयमेवार्थस्सीतां प्रत्युक्तो रावणेन रामायणे—

**किं करिष्यसि रामेण सुभगे चीरवाससा ।**

**निक्षिप्तविजयो रामः गतश्रीर्वनगोचरः ।**

**व्रती स्थण्डिलशायी च शङ्के जीवति वा न वा** ॥ इति ॥

तस्मिन् तथाविधे रामे सततं सर्वकालं चेतोरागं मनः-प्रीतिं ते तव कर्तुं अप्युचितं उचितं किम्? तत्करणमनुचित-मित्यर्थः । अपिः प्रश्ने ॥

**सीता प्रत्याह—**

रे इत्यध्याहार्यम् । तव ईदृशि वाचि योगस्संनहनं **"योग-स्संनहनोपायध्यानसङ्गतियुक्तिषु"** इत्यमरः । मुहुः असकृत् भवतु प्रवर्तताम् मम हृतिः का? वाचाटस्त्वं मुहुर्मुहुरेवमेव प्रलप तव प्रलपनेन मम न कापि क्षतिरित्यर्थः ॥

**प्रत्युक्तिगूढार्थस्तु—**

रे! तव ईदृशि **"शृणु त्वं मे वाचं कलितनियमे"** इत्यादिरूपायां वाचि यः यकारः गः गकारः भवतु तव वाचि यो यो यकारो वर्तते तस्य सर्वस्य स्थाने गकारो वाच्य इत्यर्थः । मम का हृतिः? तथा चेत् रामप्रशंसापरतया एतदाकर्णनेन मम न कापि हानिः अपि तु महान् परितोष एवेत्यर्थः ॥

एवं च—

**शृणु त्वं मे वाचं कलितनिगमे संगतवच-**
**स्यहो तस्मिन् रामे सरुचिघनगात्रे भगवति ।**
**भृशं चेतोरागं सततमपि ते कर्तुमुचितम् ॥**

इति वाच्यमिति फलितम् ॥

अहो सीते! त्वं मे वाचं शृणु । कलितनिगमे—कलिताः विदिताः निगमा वेदाः यजुरादयः धनुर्वेदादयश्च येन स तथोक्तः "कलितो विदिताप्तयोः" इति रत्नमाला । निगमशब्दः तदङ्गानामप्युपलक्षकः तथा च वेदवेदाङ्गविदित्यर्थः । उक्तं च रामायणे भगवतो रामस्य वेदवेदाङ्गवित्त्वम्—

**वेदवेदाङ्गतत्त्वज्ञः धनुर्वेदे च निष्ठितः ।**
**सर्वशास्त्रार्थतत्त्वज्ञः स्मृतिमान् प्रतिभानवान् ॥**

इति बालकाण्डे,

**यजुर्वेदविनीतश्च वेदविद्भिस्सुपूजितः ।**
**धनुर्वेदे च वेदेषु वेदाङ्गेषु च निष्ठितः ॥**

इति सुन्दरकाण्डे च ।

सङ्गतवचसि—सङ्गतानि वेदवेदाङ्गवित्त्वात् सर्वशास्त्रोपपन्नानि वचांसि यस्य तस्मिन्, सरुचिघनगात्रे—रुच्या कान्त्या सह वर्तत इति सरुचिः जलपूरितत्त्वेन नीलकान्तिरित्यर्थः । यो घनः मेघः स इव गात्रं शरीरं यस्य तस्मिन् नीलमेघश्याम इत्यर्थः । "**घनस्सान्द्रे दृढे दार्ढ्ये विस्तारे मुद्गरेऽम्बुदे**" इति हेमचन्द्रः । अनेन मेघ इव रामः सर्वसंतापहर इति व्यज्यते । भगवति षड्गुणैश्वर्यसंपन्ने तस्मिन् प्रसिद्धे रामे भृशं सततमपि चेतोरागं कर्तुं ते उचितम् तादृशाद्रामादन्यः कोऽनुरागस्थानम्? अतस्तव तस्मिन्नेव अनुरागो युज्यत इत्यर्थः । इदं प्रतिदत्ताक्षरम् ॥

**पृथ्वीनन्दिनि सर्वदाविमलधीर्नो विद्यते मादृशः मादृक्षो न जगत्त्रयेऽपि महताऽऽचारेण युक्तः पुमान् । रागेणैव महीनवृन्दमिह मां संश्लाघते सन्ततं नैवं जल्प नृशंस रे न महितं यस्मात्त्वदीयं वचः ॥५१॥**

**पृथ्वीति** ॥ पृथ्वीनन्दिनि सीते! मादृशः सर्वदाविमलधीः—सर्वदा, विमला सद्विषयचिन्तनेन प्रसन्ना यद्वा पूर्णकामत्वात् चिन्ता-कालुष्यरहिता धीः यस्य स तथोक्तः नो विद्यते नास्ति । जगत्त्रयेऽपि त्रिषु जगत्स्वपि मादृक्षः महता उत्कृष्टेन आचारेण शीलेन युक्तः पुमान् पुरुषः न नास्ति । अत एवेति शेषः । इह अस्मिन् लोके महीनवृन्दं—मह्या इनाः प्रभवः महीनाः राजानः "**इनस्सूर्ये प्रभौ**" इत्यमरः । तेषां वृन्दं निचयः सन्ततं न तु कदाचिदित्यर्थः रागेणैव गुणानुरक्ततयैव न तु दाक्षिण्यभयादिनेति भावः मां संश्लाघते ॥

**सीता प्रत्याह—**

रे नृशंस घातुक! एवं न जल्प यस्मात् यतः कारणात् त्वदीयं वचः नमहितं अपूजितं अश्रव्यमित्यर्थः यद्वा महितं न—इत्यन्वयः ॥

**प्रत्युक्तिगूढार्थस्तु—**

रे नृशंस! नैवं जल्प यस्मात् त्वदीयं वचः महितं—मेन ह्रस्वाकारघटितमकारेण हेतुना हितं महितं न तद्रहितं सत्

हितमेव भवतीत्यर्थः । तथा च अत्र मादृश इत्यादौ दीर्घा-दिघटितमकारस्य व्यवच्छेदः ॥

एवं च—

**पृथ्वीनन्दिनि सर्वदाविलधीर्नो विद्यते मादृशः**
**मादृक्षो न जगत्त्रयेऽपि हताचारेण युक्तः पुमान् ।**
**रागेणैव हीनबृन्दमिह मां संश्लाघते सन्ततम् ॥**

इति वाच्यमिति फलितम् ।

पृथ्वीनन्दिनि! मादृशः सर्वदाविलधीः सर्वदा आविला दुश्चिन्तया कलुषा धीः यस्य स तथोक्तः सर्वदा दुर्विषयानेव चिन्तयन्नित्यर्थः नो विद्यते । जगत्त्रयेऽपि मादृक्षः हताचारेण हतेन दुष्टेन आचारेण युक्तः पुमान् न नास्ति । इह अत्र लोके एव-शब्दो भिन्नक्रमः हीनबृन्दमेव हीनानां गर्ह्याणां बृन्दमेव "हीन-न्यूनावूनगर्ह्यौ" इत्यमरः । मां सन्ततं रागेण संश्लाघते ईदृशं पापिनं सन्तः कथं श्लाघेरन्निति भावः ॥ इदं च्यावितक्षरम् ॥

**चेतोऽहं कलयन् सदा हरपदे तिष्ठामि सीते यतो भूयोवीरजयस्ततो हि परितस्स्यां श्लाघ्य आयोधने । ईदृक्षं क इहैष सङ्गरहरिः खल्वित्यहो नाह मां नीचेयं तव वागरे विरसतायुक्तेत्यहं भावये ॥५२॥**

चेत इति ॥ अहो सीते! अहं यतः यस्मात्कारणात् सदा हरपदे हरस्य, महादेवस्य पदे चरणे चेतः चित्तं कलयन् निवेशयन् हरचरणौ सन्ततं ध्यायन्नित्यर्थः। तिष्ठामि स्थैर्येण वर्ते ततः तस्मात् कारणात् तद्ध्यानमहिमत इत्यर्थः। आयोधने युद्धे भूयोवीरजयः—भूयान् वीराणां कर्मभूतानां जयः यस्य स तथोक्तः परितस्सर्वतः श्लाघ्यः श्लाघितुं योग्यः स्यां हि भवेयमेव निरन्तरमहादेवचरणध्यानेन तदनुग्रहमासेदुषो मे जयश्रीर्नियतैवेति भावः। इह अस्मिन् लोके ईदृक्षं महादेवचरणानुग्रहसमासादिताशेषविजयं महाशूरमित्यर्थः मां "एषः रावणः सङ्गरहरिः खलु रणकण्ठीरव एव" इति कः नाह न वदति? सर्वेऽप्याहुरित्यर्थः ॥

सीता प्रत्याह—

अरे नीच! इयं तव वाक् विरसतायुक्ता वैरस्योपेता इति अहं भावये जानामि अतो न श्रव्येति भावः ॥

प्रत्युक्तिगूढार्थस्तु—

अरे! नीचा असत्यात्मश्लाघनेन अश्रव्या इयं—"चेतोऽहं कलयन् सदा हरपदे" इत्यादिः तव वाक् विरसता—विगतो रेफः यस्यास्सा विरा तेन तकारेण सह वर्तत इति सता विरा चासौ सता चेति विशेषणोभयपदकर्मधारयः "पुंवत् कर्मधारय" इत्यादिना पुंवद्भावः रेफस्थानापन्नतकारा सतीत्यर्थः युक्ता उचिता। इति अहं भावये अतो रेफं विसृज्य तत्स्थाने तकारं वदेति भावः ॥

एवं च—

चेतोऽहं कलयन् सदा हतपदे तिष्ठामि सीते यतो
भूयोवीतजयस्ततो हि पतितस्स्यां श्लाघ्य आयोधने ।
ईदृक्षं क इहैष संगतहतिः खल्वित्यहो नाह माम् ॥

इति वदेति फलितम् ।

अहो सीते! अहं यतः सदा हतपदे हते दुष्टे पदे व्यवसाये अधर्मभूतेषु कूटयुद्धोद्यमेष्वित्यर्थः । चेतः कलयन् तिष्ठामि ततः श्लाघ्ये महति आयोधने भूयोवीतजयः भूयो यथातथा वीतः विगतः जयः यस्मात्स तथोक्तः नितरां पराजित इत्यर्थः पतितः भूमौ निपातितः स्यां हि "यतो धर्मस्ततो जयः" इत्युक्तत्वेन अधर्मैकतत्परस्य मम कथं जयस्स्यादिति भावः । इह ईदृक्षं—अधर्मैकतत्परं असकृदधिगतपराजयं चेत्यर्थः । मां "एषः संगतहतिः खलु संगता युक्ता हतिर्नाशो यस्मिन् स तथोक्तः" इति कः नाह? अभिज्ञास्सर्वेऽप्याहुरित्यर्थः । असकृत् पराजितस्य उपघातस्सिद्ध एवेति भावः । प्रतिदत्ताक्षरमिदम् ॥५२॥

**मां दुर्वारमहाभुजं हृदि जनास्सर्वे विजानन्त्ययि क्षोणीनन्दिनि जातुचिन्मम लसद्भीत्यास्पदं नो मनः । सद्भैभाकरतेजसा बत मया को वा समानश्श्रुतः युक्तार्थेन विभासुरा यदि खल त्वद्वागियं श्लाघ्यते ॥५३॥**

मामिति ॥ अयि क्षोणीनन्दिनि! अयीति कोमलामन्त्रणम् सर्वे जनाः मां दुर्वारमहाभुजं–दुःखेन वारयितुं शक्याः दुर्वाराः महान्तश्च भुजा यस्य तं तथोक्तं हृदि विजानन्ति। लोके हृदये अन्यथा जानन्तोपि जनाः दाक्षिण्यभयादिना वाचा केवलं स्वामिनं प्रशंसन्ति मां तु न तथेति भावः। मम तादृशमहाभुजबलस्येत्यर्थः लसत् धैर्यसंपदा चकासत् मनः जातुचित् महासंबाधेऽपीत्यर्थः भीत्यास्पदं भयस्थानं नो न भवति। सद्वैभाकरतेजसा—विभाकरस्येदं वैभाकरं तादृशं च तत् तेजश्च वैभाकरतेजः सत् विद्यमानं वैभाकरतेजः यस्मिन् स तथोक्तः लक्ष्मणया सूर्यतेजस्समानतेजसेत्यर्थः मया समानः को वा श्रुतः न कोऽपीत्यर्थः बतेति हर्षे उक्तं सर्वं मम हर्षकरमित्यर्थः ॥

सीता प्रत्याह—

खल! इयं त्वद्वाक् युक्तार्थेन उचितेनाभिधेयेन विभासुरा यदि प्रकाशमाना चेत् "भञ्जभासमिदो घुरच्" इति घुरच्-प्रत्ययः श्लाघ्यते श्रोतृभिरिति शेषः युक्तार्थरहितत्वात् तवेयं वाक् न श्लाघ्यैवेति भावः ॥

प्रत्युक्तिगूढार्थस्तु—

खल! इयं—"मां दुर्वारमहाभुजं" इत्यादिः त्वद्वाक् विभा–विगतो भो भकारो यस्यास्सा विभा भकाररहिता सुरा—शोभनो रेफो यस्यां सा सुरा रेफवती शोभनत्वं च रेफस्य स्वाभिमतार्थबोधप्रयोजकत्वात् विवक्षितम् यदि—भकारस्थानापन्नरेफा

चेदित्यर्थः तदा युक्तार्थेन हेतुना श्लाघ्यते । अतः भकारं विसृज्य तत्स्थाने रेफं वदेत्यर्थः ॥

एवं च—

**मां दुर्वारमहारुजं हृदि जनास्सर्वे विजानन्त्ययि**
**क्षोणीनन्दिनि! जातुचिन्मम लसद्रीत्यास्पदं नो मनः ॥**
**सद्वैराकरतेजसा बत मया को वा समानश्श्रुतः ।**

इति वदेति फलितम् ॥

अयि क्षोणीनन्दिनि! सर्वे जनाः मां हृदि दुर्वारमहारुजं–दुर्वारा दुरपनोदा महती अनल्पा रुक् यद्वा रुजा परदारापहरणाद्यभिनिवेशरूपो रोगः यस्य तं दुश्शममहामनोरोगमित्यर्थः "**स्त्री रुग्रुजा चोपतापरोगव्याधिगदामयाः**" इत्यमरः विजानन्ति । मम महाधिसंतप्तस्येत्यर्थः मनः जातुचित् लसद्रीत्यास्पदं लसन्त्याः रीत्याः स्वस्थताया इत्यर्थः आस्पदं नो न भवति । सद्वैराकरतेजसा सत्सु यद्वैरं विरोधः "**वैरं विरोधो विद्वेषः**" इत्यमरः तस्य आकरः स्थानं "**आकरास्स्थानखन्योघाः**" इति रत्नमाला। तादृक् तेजः बलं यस्य तेन सज्जनविरोधसंपादकबलेनेत्यर्थः "**तेजः प्रभावे दीप्तौ च बले शुक्रेऽपि**" इत्यमरः मया समानः मादृश इति यावत् को वा श्रुतः? न कोऽपीत्यर्थः बतेति खेदे सज्जनविरोधसंपादकबलत्वं खेदकरमित्यर्थः "**खेदानुकम्पासंतोषविस्मयामन्त्रणे बत**" इत्यमरः इदं च प्रतिदत्ताक्षरम् ॥ ९३ ॥

दुर्मार्गे हृदयस्य नन्वघटनात् वर्तेऽहमीदृक्पदे के वा नो कथयन्ति हन्त घनसद्वृत्तोऽयमित्यत्र माम् ॥ विद्धि त्वं निजचर्यया निरघयात्यर्होऽयमेवेति मां । आः पापिन् किमघास्पदं वच इदं नो वेद्म्यहं तावकम् ॥ ५४ ॥

दुरिति ॥ नन्विति सीतायास्संबोधनम् दुर्मार्गे दुष्टव्यापारेष्वित्यर्थः हृदयस्य मनसः अघटनात् अयोजनात् हेतोः अहं ईदृक्पदे ईदृशि महासाम्राज्यरूपे पदे स्थाने वर्ते। कथमन्यथा तादृशी मे महाराक्षसचक्रवर्तिपदवी स्थैर्यमापद्येतेति भावः । अत्र लोके "अयं रावणः घनसद्वृत्तः—घनमधिकं यथा तथा सन्ति प्रशस्तानि अत्युत्कृष्टानीत्यर्थः वृत्तानि चरितानि यस्य स तथोक्तः

"कठिनाधिकसान्द्रेषु वाद्यमध्यमनृत्तयोः ।
मुस्तामुद्गरमूर्तेषु त्रिषु मेघे पुमान् घनः" ॥

इति रत्नमाला,

"इति के वा मां नो कथयन्ति सर्वेऽपि कथयन्तीत्यर्थः हन्तेति हर्षे एवं कथनं हर्षकरमित्यर्थः। निरघया निर्दोषया निजचर्यया स्ववृत्त्या हेतौ तृतीया "अयमेव एष रावण एव अत्यर्हः अतितरां योग्यः न तु सुवृत्ततया जगत्यातितरामर्हणामापन्न ईदृगन्य इत्यर्थः" इति त्वं मां विद्धि जानीहि यद्यपि मम योग्यतामितरे सर्वेऽपि विदन्ति अथापि यदि त्वं वेत्सि मम परमो लाभ इति भावः ।

एवं च—

उच्चैर्विक्रमशालिनाऽपि रिपुणा सङ्गोऽस्य नो जातुचित्

संग्रामे बहुदारुणे परमहासायत्तमूर्तेर्मम ॥

केदृक्षोऽहमिळासुते स जगतीसारस्तव क्व प्रियः ॥

इति फलितम् ।

नन्विळासुते! बहुदारुणे संग्रामे परमहासायत्तमूर्तेः परमहासस्य महाहास्यस्य आयत्ता मूर्तिर्यस्य तस्य अवीरतया सर्वैरत्यन्तमपहास्यस्येत्यर्थः अस्य मम जातुचित् उच्चैर्विक्रमशालिना रिपुणा सहार्थे तृतीया अपिशब्दो भिन्नक्रमः सङ्गोऽपि सबन्धोऽपि नो न स्यात् अपिशब्देन युद्धस्य दूरापास्तत्वं व्यज्यते अवीरस्य स्वसदृशेनैव योद्धुं शक्यत्वात् । ईदृक्षः अवीर इत्यर्थः अहं क्व? जगतीसारः जगत्याः जगतः सर्वेभ्योऽपीत्यर्थः सारः शौर्यधैर्यादिगुणशालितया श्रेष्ठः यद्वा जगत्यां सारस्सारभूतः सः प्रसिद्धः तव प्रियः क्व? जगत्सारं तमेव आदर्तुं तवोचितमिति भावः । प्रतिदत्ताक्षरं चित्रम् ॥ ५६ ॥

नित्यं दोषस्स्थदृष्टिः कथित इह धरापुत्रि! लोके समस्तैः काकुत्स्थस्तोषदस्ते भवति ननु कथं चेतसश्शृण्वहं तु । सद्वृत्तरेष नस्संश्रय इति कथितोऽस्म्यञ्जसाऽऽशासनीयः भ्रष्ट क्रव्याद मैवं वद तव वचनं मे विषं भाति नूनम् ॥ ५६ ॥

नसद्वृत्तः—न सत् नसत् नशब्देन सह समासः वृत्तं कर्म परदारग्रहणादिकं यस्य. स तथोक्तः" इति मां के वा नो कथयन्ति? सर्वेऽपि कथयन्त्येवेत्यर्थः । "अयं समीपस्थो रावणः निजचर्यया स्वदुर्वृत्त्या एवशब्दो भिन्नक्रमः निरयात्यर्ह एव निरयाय नरकाय "**स्यान्नारकस्तु नरको निरयो दुर्गतिस्त्रियाम्**" इत्यमरः तं गन्तुमित्यर्थः "**क्रियार्थोपपदस्य च कर्माणि स्थानिनः**" इति चतुर्थी । अत्यर्ह एव अतितरां योग्य एव" इति मां विद्धि । ईदृशस्य दुर्वृत्तस्य नरकादन्या का गतिरिति भावः । च्यावितासरमिदम् ॥ ९४ ॥

**उच्चैर्विक्रमशालिनाऽपि रिपुणा भङ्गोऽस्य नो जातुचित्संग्रामे बहुदारुणे परमहाभायत्तमूर्तेर्मम ॥ केदृक्षोऽहमिळासुते स जगतीभारस्तव क प्रियः वाक्केऽर्थेन विभासिनी यदि सतां श्लाघ्या भवेदुर्मते ॥ ५५ ॥**

उच्चैरिति ॥ नन्विळासुते! हे सीते! बहुदारुणे अतिघोरे संग्रामे युद्धे परमहाभायत्तमूर्तेः—परा उत्कृष्टा अनितरसुलभेत्यर्थः महती अधिका या भा यद्वा आभा प्रतापजन्या कान्तिः तस्याः आयत्ता अधीना मूर्तिरात्मा यस्य तस्य महातेजस्संपन्नस्येत्यर्थः अस्य मम अस्येति हस्तेनात्मनो निर्देशः जातुचित् कदाचिदपि उच्चैर्विक्रमशालिनाऽपि—उच्चैर्महान् यो विक्रमः तेन शालते शोभत

इति उच्चैर्विक्रमशाली तादृशेनापि रिपुणा शत्रुणा भङ्गः पराजयः "**भङ्गस्तरङ्गे भेदे च रुग्विशेषे पराजये**" इति हैमः नो न भवेत् महाविक्रमशालिनाऽप्यपराजितस्य मे साधारणः कियानिति भावः। ईदृक्षः—जगदसाधारणपराक्रम इत्यर्थः अहं क? जगतीभारः जगत्याः भूमेः भारः भारभूतः अवीरतयेति भावः सः—त्वया मुहुर्मुहुः प्रशस्यमान इत्यर्थः तव प्रियः राम इति यावत् क? मम तस्य च महत्तारतम्यमस्तीत्यर्थः अतः अवीरं तमनादृत्य महावीरं मां वृणीष्वेति भावः।

**सीता प्रत्याह—**

दुर्मते दुर्बुद्धे! ते वाक् अर्थेन अभिधेयेन विभासिनी यदि विभासः प्रकाशः अस्यामस्तीति तादृशी सदर्थशोभिता चेदित्यर्थः अर्थस्य विभासहेतुत्वोक्त्या अर्थशब्देन सदर्थ एव विवक्षितः। सतां विदुषां श्लाध्या श्लाघितुं योग्या भवेत् "**कृत्यानां कर्तरि वा**" इति षष्ठी इयं तव वाक् विभासित्वाभावात् सद्भिर्न श्लाघ्यत इत्यर्थः।

**प्रत्युक्तिगूढार्थस्तु—**

दुर्मते! विभा—विगतो भो भकारो यस्यास्सा भकाररहिता सिनी सः सकारः अस्यामस्तीति सिनी सकारसहिता यदि—भकारस्थानापन्नसकारा चेदित्यर्थः अर्थेन हेतुना सतां श्लाघ्या भवेत् भकारस्थानापन्नसकारत्वात् सदर्थविशिष्टां तवेमां वाचं सन्तस्सर्वे श्लाघन्त इत्यर्थः।

एवं च—

उच्चैर्विक्रमशालिनाऽपि रिपुणा सङ्गोऽस्य नो जातुचित्
संग्रामे बहुदारुणे परमहासायत्तमूर्तेर्मम ॥
कीदृक्षोऽहमिळासुते स जगतीसारस्तव क्व प्रियः ॥

इति फलितम् ।

नन्विळासुते ! बहुदारुणे संग्रामे परमहासायत्तमूर्तेः परमहासस्य महाहास्यस्य आयत्ता मूर्तिर्यस्य तस्य अवीरतया सर्वैरत्यन्तमपहास्यस्येत्यर्थः अस्य मम जातुचित् उच्चैर्विक्रमशालिना रिपुणा सहार्थे तृतीया अपिशब्दो भिन्नक्रमः सङ्गोऽपि सबन्धोऽपि नो न स्यात् अपिशब्देन युद्धस्य दूरापास्तत्वं व्यज्यते अवीरस्य स्वसदृशेनैव योद्धुं शक्यत्वात् । ईदृक्षः अवीर इत्यर्थः अहं क्व? जगतीसारः जगत्याः जगतः सर्वेभ्योऽपीत्यर्थः सारः शौर्यधैर्यादिगुणशालितया श्रेष्ठः यद्वा जगत्यां सारस्सारभूतः सः प्रसिद्धः तव प्रियः क्व? जगत्सारं तमेव आदर्तुं तवोचितमिति भावः ।

प्रतिदत्ताक्षरं चित्रम् ॥ ९६ ॥

नित्यं दोषस्स्थदृष्टिः कथित इह धरापुत्रि! लोके समस्तैः काकुत्स्थस्तोषदस्ते भवति ननु कथं चेतसश्शृण्वहं तु । सद्वृत्तरेष नस्संश्रय इति कथितोऽस्म्यञ्जसाऽऽशासनीयः भ्रष्ट क्रव्याद मैवं वद तव वचनं मे विषं भाति नूनम् ॥ ५६ ॥

**नित्यमिति** ॥ धरापुत्रि! इह लोके भुवीत्यर्थः समस्तैः नित्यं सर्वकालं दोषस्स्थदृष्टिः—दोषेषु तिष्ठतीति दोषस्स्था तादृक् दृष्टिर्ज्ञानं यस्य स तथोक्तः दोषैकदृक् सन् इत्यर्थः कथितः कीर्तितः काकुत्स्थः रामः ते चेतसः चित्तस्य तोषदः—तोषं संतोषं ददातीति तोषदः कथं ननु भवति? सर्वत्र दोषानेव पश्यन् रामः गुणग्रहणेन तव संतोषं कथमुत्पादयेदिति भावः यद्वा दोषस्स्थदृष्टिः अकार्यमेव सर्वदा चिन्तयान्नित्यर्थः कथितः काकुत्स्थः ते चेतसः कथं ननु तोषदस्स्यात्? सर्वदा अकार्यचिन्तकं तं दृष्ट्वा कथं वा त्वं तुष्यसीति भावः नन्विति प्रश्ने दोषस्स्थेत्यत्र "अनाचि च" इति सकारस्य द्वित्वम् । शृणु वक्ष्यमाणं वचनमिति शेषः अहं तु तुशब्दो रामात् भेदप्रदर्शनाय प्रयुक्तः सद्वृत्तैः केवलगुणग्रहणादिभिस्सत्कर्मभिः हेतुभिः "एषः रावणः नः अस्माकं संश्रयः आश्रयभूतः" इति कथितः जनैरिति शेषः सुवृत्ततया अयमस्माभिराश्रयणीय इति सर्वे मां कथयन्तीत्यर्थः अत एव त्वयेति शेषः अञ्जसा द्राक् "**स्राग्झडित्यञ्जसाऽह्नायद्राक्**" इत्यमरः आशासनीयः आशासितुं कामयितुं योग्यः अस्मि आङ्पूर्वकात् इच्छार्थकात् शासुधातोरनीयर् दुर्वृत्तं राममनादृत्य सुवृत्तं मां कामयस्व मया ते महान् संतोषस्स्यादिति भावः ॥

**सीता प्रत्याह—**

भ्रष्ट नीच! क्रव्याद निशिचर! एवं मा वद हि—यस्मात् तव इदं वचनं मे विषं भाति अहमिदं क्रूरतया विषवदनिष्टसंपादकं जानामीत्यर्थः ॥

प्रत्युक्तिगूढार्थस्तु—

भ्रष्ट क्रव्याद एवं—'ष' इत्याकारकस्य वर्णस्य वैशिष्ट्येन मा वद हि यस्मात् तव इदं वचनं मे विषं—विगतषः ह्रस्वाकारघटितषकारः यस्मात्तथोक्तं सत् भाति षरहितं चेत् शोभत इत्यहं जानामीत्यर्थः अतस्तथा वदेति भावः। तथा च अत्र दृष्टिरिति स्थले इकारघटितषकारस्य व्यवच्छेदः॥

एवं च—

**नित्यं दोस्स्थदृष्टिः कथित इह धरापुत्रि लोके समस्तैः**
**काकुत्स्थस्तोदस्ते भवति ननु कथं चेतसश्शृण्वहं तु।**
**सद्वृत्तैरेनस्संश्रय इति कथितोऽस्म्यञ्जसा शासनीयः॥**

इति वाच्यमिति फलितम्॥

धरापुत्रि! इह लोके काकुत्स्थः समस्तैः नित्यं दोस्स्थदृष्टिः दोषोः भुजयोः तिष्ठतीति दोस्स्था तादृशी दृष्टिः दर्शनं यस्य स तथोक्तः महावीरोचितत्वेन सर्वदा निजभुजदण्डावालोकयन् सन् इत्यर्थः। अस्मिन् पक्षे दोस्स्थेत्यत्र सकारस्य द्वित्वं स्वत एव सिद्धम्। इति कथितः अत इति शेषः ते चेतसः तोदः व्यथा कथं ननु भवति? महावीरपत्न्यास्तव मनोव्यथा न संभवत्येवेत्यर्थः। शृणु अहं तु सद्वृत्तैः सत् वृत्तं येषां तैस्साधुभिः एनस्संश्रयः एनसां पापानां संश्रयः स्थानं "**कलुषं वृजिनैनोऽघम्**" इत्यमरः। इति कथितः अतः अञ्जसा शासनीयः शासितुं निगृहीतुं शक्यः रामेणेति शेषः। शासु अनुशिष्टावित्यस्माद्धातोः

शक्यार्थे अनीयर् । अस्मि पापीयांसं मां दुष्टनिग्रहार्थं भूमावतीर्णो भगवान् श्रीराम एव निहन्तुं शक्नुयादिति भावः ॥ इदं च च्याविताक्षरम् । स्रग्धरा वृत्तम् ॥ ९६ ॥

**सद्यस्स्युर्विमता जना ननु सदामन्दं विलोक्येह यं यो लोकामहितैर्गुणैश्च मलवत्कीर्त्याश्रयो वर्तते । यस्सर्वैर्मलिनाक्ष इत्यवधृतः किं तेन पत्या सुखं स्यादेषोक्तिरमानिनीजनपरीतोषावहा पातकिन् ॥ ५७ ॥**

सद्य इति ॥ ननु ! नन्विति सीतायास्संबोधनम् इह जनाः सदामन्दं सर्वदामूढबुद्धिं यं विलोक्य सद्यः विमताः विरुद्धाशयाः अनादरा इति यावत् स्युः भवेयुः मूढं को वा आद्रियेतेति भावः । किं चेति चार्थः यः लोकामहितैः लोकस्य जनस्य अमहितैः अपूजितैः जनेन अश्लाघ्यमानैरित्यर्थः । गतिबुद्धीत्यादिना वर्तमाने क्तः "क्तस्य च वर्तमाने" इति षष्ठी । गुणैः भीरुत्वादिभिः मलवत्कीर्त्याश्रयः मलं दोषः अस्यामस्तीति मलवती कलङ्कयुक्तेति यावत् तादृश्याः कीर्त्याः आश्रयः स्थानं वर्तते । यः मलिनाक्षः मलिनानि विकलानि कार्याक्षमाणीति यावत् अक्षाणीन्द्रियाणि यस्य स तथोक्तः दुर्दशापन्नत्वादिति भावः। "अक्षमिन्द्रिये" इत्यमरः । इति सर्वैः अवधृतः ज्ञातः तेन—तादृशेन मूढेन कुकीर्तिना विकलेन्द्रियेण चेत्यर्थः पत्या रामेणेति

यावत् किं सुखं? न किमपीत्यर्थः। तादृशमनादृत्य विवेकिनं कीर्तिशालिनं विलसदिन्द्रियं च मां वृणीष्वेति भावः॥

सीता प्रत्याह—

पातकिन्! एषा उक्तिः त्वदुक्ता वागित्यर्थः अमानिनीजनपरीतोषावहा—मानश्चित्तसमुन्नतिरासामस्तीति मानिन्यः "**प्रमदा मानिनी कान्ता**" इत्यमरः। मानिन्य इति जनाः मानिनीजनाः तेषां परीतोषस्संतोषः "**उपसर्गस्य घञि**" इति दीर्घः। आवहतीत्यावहा मानिनिजिनपरीतोषस्यावहा सा न भवतीत्यमानिनीजनपरीतोषावहा स्यात् तवेमां वाचमाकर्ण्य दुश्चरिनाः कामिन्यः परितुष्येयुः न तु मादृश्यो मानिन्य इत्यर्थः॥

प्रत्युक्तिगूढार्थस्तु—

पातकिन्! एषा—**मद्यस्स्युर्विमता जनाः**—इत्यादिका उक्तिः अमा—न विद्यते मः मकारो यस्यां सा मकाररहिता निनी—नः नकारः अस्यामस्तीति निनी नकारसहिता मकारस्थानापन्ननकारा सतीत्यर्थः। जनपरीतोषावहा श्रोतृजनानन्दकरी स्यात्॥

एवं च—

मद्यस्स्युर्विनता जना ननु सदानन्दं विलोक्येह यं
यो लोकानहितैर्गुणैश्च नलवत्कीर्त्याश्रयो वर्तते।
यस्सर्वैर्नलिनाक्ष इत्यवधृतः किं ते न पत्या सुखम्॥

इति फलितम्।

ननु! इह जनाः सदानन्दं परमानन्दस्वरूपं यं विलोक्य सद्यः विनताः नम्राः स्युः सच्चिदानन्दस्वरूपस्य भगवतो रामस्य संदर्शने सति को वा भक्त्या तं न प्रणमेदिति भावः। किंच यः लोकानहितैः—न अहिताः अनहिताः लोकानामनहिताः तैः लोकहितैरित्यर्थः गुणैः सत्यादिभिः नलवत् नलेन तुल्यं "**तेन तुल्यम्**" इत्यादिना वतिः नल इवेत्यर्थः। कीर्त्याश्रयः वर्तते नलो यथा सत्यादिभिस्सद्गुणैः जगति सत्कीर्तिमलभत तथा सत्कीर्तिं लब्धवानित्यर्थः। यः नलिनाक्षः—नलिने पुण्डरीके इव अक्षिणी यस्य स तथोक्तः महाविष्णुः "**दैत्यारिः पुण्डरीकाक्षः**" इत्यभिधानात् "**बहुव्रीहौ सक्थ्यक्ष्णोस्स्वाङ्गात् षच्**" इति षच्। इति सर्वैः तत्त्वदर्शिभिरित्यर्थः। अवधृतः निश्चितः दुष्टसंहारार्थं भुवि मानुषरूपेण अवतीर्णो भगवान् महाविष्णुरेवायमिति विदित इत्यर्थः तेनेत्यध्याहार्यम् यत्तदोर्नित्यसंबन्धात्। तेन—सच्चिदानन्दस्वरूपतया सर्वैरभिवन्द्येन, लोकहितगुणतया नलेनेव कीर्तिशालिना, महामहिमतया महाविष्णुरेवायमिति तत्त्वज्ञैरखिलैर्विज्ञायमानेन चेत्यर्थः। पत्या रामेणेति यावत् ते किं सुखं न? सर्वमपि सुखं संपद्यत एवेत्यर्थः। इदं प्रतिदत्ताक्षरम् ॥ ९७ ॥

**मय्युग्रं समरं गतेऽयि शमनश्चिन्तास्पदं स्याद्भिया शक्रोऽधोमुखभाक् झडित्यवनिजे दूरं व्रजेत्कुत्र वा। नन्वत्रानुचिता मम स्थितिरिति श्री-**

**शस्ततो निस्सरेत् रे रात्रिंचरनीच तावकवचश्शोभास्पदं नो भवेत् ॥५८॥**

**मयीति** ॥ अयि अवनिजे! मयि उग्रं रौद्रं यथा तथा समरं रणाङ्गणं देवावृतमित्यर्थः गते प्राप्ते सति शमनः यमः "**शमनो यमराड्यमः**" इत्यमरः। भिया भयेन चिन्तास्पदं चिन्तास्थानं स्यात् अन्तकोपि भीतः कथं नु कर्तव्यमिति चिन्तया आकुलो भवेदित्यर्थः । शक्रः देवेन्द्रः भियेत्यनुषज्यते झडिति सहसा अधोमुखभाक् अधोमुखं भजतीति तादृशः मुखमधःकुर्वन्नित्यर्थः दूरं दूरं यथा तथा कुत्र वा व्रजेत् गतो मार्गितोपि न लभ्यत इत्यर्थः । श्रीशः विष्णुः "अत्र अस्मिन् समराङ्गणे मम स्थितिः वर्तनं अनुचिता ननु अनर्हैव स्वस्याप्यपमानसंभवादिति भावैः" इति ततः तस्मात् समराङ्गणात् निस्सरेत् बहिर्गच्छेत् इन्द्रयमविष्णवादीनामपि भयप्रदातुर्महावीरस्य मम प्रतिपक्षो जगति न कोप्यस्तीति भावः । अयमेवार्थस्सीतां प्रत्युक्तो रावणेन रामायणे—

> **नेह पश्यामि लोकेऽन्यं यो मे प्रतिबलो भवेत् ।**
> **पश्य मे सुमहद्वीर्यमप्रतिद्वन्द्वमाहवे ॥**
> **असकृत्संयुगे भग्ना मया विमृदितध्वजाः ।**
> **अशक्ताः प्रत्यनीकेषु स्थातुं मम सुरासुराः** ॥ इति ॥

**सीता प्रत्याह—**

रे रात्रिचरनीच! तावकवचः त्वदीयं वचनं शोभास्पदं

शोभास्थानं शोभावहमित्यर्थः नो भवेत् न स्यात् अनुचितत्वादिति भावः ॥

प्रत्युक्तिगूढार्थस्तु—

रे रात्रिचरनीच! तावकवचश्शः तावके वचसि यश्शः अकारघटितशकारः सः भास्पदं भासश्शोभायाः पदं स्थानं यद्वा भायाः आस्पदं नो भवेत् शवर्णघटितत्वेन तवेदं वचनं न शोभते अतश्शवर्णं विहाय वदेत्यर्थः अकारघटितशकारस्यैवात्र ग्रहणात् "शि श्री" इत्यनयोर्व्यवच्छेदः ॥

एवं च—

मय्युग्रं समरं गतेऽयि मनश्चिन्तास्पदं स्याद्भिया
क्रोधो मुखभाग्झडिस्यवनिजे दूरं व्रजेत्कुत्र वा ।
नन्वत्रानुचिता मम स्थितिरिति श्रीस्ततो निस्सरेत् ॥
इति वदेति फलितम् ॥

अयि अवनिजे! मयि उग्रं घोरं समरं गते सति भिया हेतुना मनः ममेत्यध्याहार्यम् चिन्तास्पदं स्यात् साधारणे समरे निर्भयो निश्चिन्तो योद्धुं शक्नुयाम् न तु घोरे समर इति भावः। मुखभाक् मुखानि भजतीति मुखभाक् युद्धात् पूर्वं मुखेषु स्थित इत्यर्थः क्रोधः शत्रुविषयकोऽमर्षः झडिति दूरं कुत्र वा व्रजेत् अशक्ततया उपशान्त एव स्यामिति भावः । ततः तस्मात् कारणात् मम तादृशदुर्दशापन्नत्वादित्यर्थः । श्रीः जयलक्ष्मीः राज्य-

लक्ष्मीर्वा अत्र ईदृशि भीरावित्यर्थः "मम स्थितिः अनुचिता ननु" इति निस्सरेत्, भीरुं मां परित्यज्य अन्यतो गच्छेदित्यर्थः । च्यावितारक्षरमिदं चित्रम् ॥९८॥

**रामश्चेतसि न प्रसीदति वने वासात्कदाऽपि स्वयं ब्रूते हन्त मनःप्रहारि वचनं दृष्टान् समस्तानपि । हीनाद्वैभवतः प्रतारयति भूजाते जनान् बोधयन् मा जल्पीर्न हि युज्यते खलमते वाचः प्रयोगस्तव ॥५९॥**

राम इति ॥ भूजाते! रामः वने वासात् हेतोः लक्षणया वनवासक्लेशादित्यर्थः कदाऽपि यदा कदाचिदपि स्वयं चेतसि चित्ते न प्रसीदति प्रसन्नचित्तो न भवतीत्यर्थः सर्वदा चिन्ताकुल एव वर्तत इति भावः । दृष्टान् समस्तानपि यान् यान् पश्यति तान् सर्वानपीत्यर्थः । मनःप्रहारि मनः प्रहरतीति मनःप्रहारि मनस्तोदकरामित्यर्थः । वचनं ब्रूत हन्तेति खेदे "अकथितं च" इति ब्रुवो द्विकर्मकत्वम् "कथं महाक्लेशयुतस्य मनः प्रसीदेत् कथं वा तस्य मुखात् मृदुवचनं निस्सरेत्?" इति भावः । हीनात् त्यक्तात् वैभवतः ऐश्वर्यात् पञ्चम्यास्तसिः ल्यब्लोपे पञ्चमी त्यक्तमैश्वर्यं प्रस्तूयेत्यर्थः जनान् बोधयन् प्रतारयति वञ्चयते "दैवसंकल्पवशादिदानीं भ्रष्टैश्वर्योऽस्मि पुनरप्यहमैश्वर्यं प्राप्य युष्मानतितरां तोषयिष्यामि" इति प्रलोभ्य जनानावर्जयतीत्यर्थः ॥

सीता प्रत्याह—

खलमते! दुर्बुद्धे! मा जल्पीः हि यस्मात् तव वाचः वचसः प्रयोगः व्यवहरणं न युज्यते युक्तं न भवति ॥

प्रत्युक्तिगूढार्थस्तु—

खलमते! मा जल्पीः हि यस्मात् तव वाचः प्रयोगः प्रेत्याकारकेण वर्णेन संगतिः न युज्यते प्रवर्णं विहाय वदसि यदि युज्यत इति भावः ॥

एवं च—

रामश्चेतसि न सीदति वने वासात्कदाऽपि स्वयं
ब्रूते हन्त मनोहारि वचनं दृष्टान् समस्तानपि ॥
हीनाद्वै भवतस्तारयति भूजाते जनान् बोधयन् ॥

इति वाच्यमिति फलितम् ॥

भूजाते! रामः वने वासात् कदाऽपि चेतसि न सीदति न खिद्यते सत्यप्रतिश्रवतया "महाराजेन मया कथमीदृशि वने वस्तव्यम्" इति न कदाऽपि चिन्तयतीत्यर्थः। दृष्टान् समस्तानपि परिचितानपरिचितांश्चेत्यर्थः मनोहारि मनोहरं वचनं स्वयं ब्रूते हन्तेति हर्षे "पूर्वभाषी तु राघवः" इत्युक्तेरनुसारेण सर्वान् स्वयमेव मृदुमधुरैर्वचनैः संभाष्य संतोषयत्येवेत्यर्थः जनान् आश्रितानिति यावत् बोधयन् हितमुपदिशन् हीनात् गर्ह्यात् भवतः संसारात् तारयति वै तारयत्येव वै इति निश्चये संसारोत्तरणे श्रीरामहितोपदेशात्परं किमस्तीति भावः। इदं च च्यावितारक्षम् ॥ ९९ ॥

**प्राप्तापन्नदशो वने जनकजे जागर्ति यस्संततं लोकस्याप्यखिलस्य दास इति यो विज्ञायते लक्षणैः । काकुत्स्थस्स न किं दरं वितरति स्वेभ्यो जनेभ्यो मुहुः स्वैरं जल्प नृशंस रे पुनरहं देवं मुहुर्भावये ॥ ६० ॥**

प्राप्तेति ॥ जनकजे! यः प्राप्तापन्नदशः प्राप्ता आपन्नस्य आपत्प्राप्तस्य दशा अवस्था येन स तथोक्तः वने सन्ततं रात्रिमपीत्यर्थः जागर्ति निद्रारहितो वर्तते भयादिति भावः । यः लक्षणैः कुवसनधारणादिरूपैर्दारिद्र्यलिङ्गैः "अखिलस्यापि लोकस्य जनस्य दासः किङ्करः" इति विज्ञायते जनैरिति शेषः । सः तादृशः काकुत्स्थः रामः स्वेभ्यः स्वकीयेभ्यः जनेभ्यः कळत्रमित्रसोदरादिभ्यः मुहुः दरं भयं न वितरति किम्? वितरत्येवेत्यर्थः केवलदुर्दशापन्ने तादृशि रामे दृष्टे सति "अयमग्रे किंविधस्स्यात्" इति भयं त्वदार्दबन्धुजनस्य मनसि बहुधा संपद्यत एवेत्यर्थः ॥

सीता प्रत्याह—

रे नृशंस! स्वैरं स्वच्छन्दं ते यथायथा रोचते तथा तथेत्यर्थः । जल्प नृशंसस्य ते स्वच्छन्दजल्पनस्य उचितत्वादिति भावः । अहं पुनः अहं तु देवं स्वामिनं श्रीराममित्यर्थः मुहुः असकृत् भावये ध्यायामि तद्ध्यानमहिम्ना मम त्वद्दुर्वचनश्रवणजनितदुरितलेपो न भवत्येवेति भावः ॥

प्रत्युक्तिगूढार्थस्तु—

रे नृशंस! स्वैरं जल्प अहं पुनः दे दकारस्थाने वं वकारं मुहुः असकृत् अत्र ते वचसि यत्रयत्र दकारोस्ति तत्र सर्वत्रापीत्यर्थः भावये चिन्तये जानामीत्यर्थः तथा सति त्वद्वचनं श्रव्यमेव स्यात् अतस्त्वया तथा वाच्यमिति भावः ॥

एवं च—

प्राप्तापन्नवशोऽवने जनकजे जागर्ति यस्सन्ततं
लोकस्याप्यखिलस्य वास इति यो विज्ञायते लक्षणैः ॥
काकुत्स्थस्स न किं वरं वितरति स्वेभ्यो जनेभ्यो मुहुः ॥
इति वाच्यमिति फलितम् ॥

जनकजे! प्राप्तापन्नवशः प्राप्ताः शरणं गताः ये आपन्नाः तेषां वशः भक्तपराधीन इत्यर्थः। यः अवने तेषां प्राप्तापन्नानां रक्षणे सन्ततं सर्वकालं जागर्ति जागरूकत्वेन वर्तते आर्तत्राणपरायणत्वादिति भावः। यः लक्षणैः अनितरसाधारणपुण्डरीकाक्षत्वादिभिः अखिलस्यापि लोकस्य सर्वेषां जगतां वासः अधिष्ठानं कुक्षिस्थाखिललोकश्रीमान् नारायण इत्यर्थः इति विज्ञायते काकुत्स्थः सः ककुत्स्थवंशे दाशरथित्वेन भूमाववतीर्णो भगवान् हरिरित्यर्थः स्वेभ्यः जनेभ्यः स्वभक्तेभ्यः मुहुः यदायदा इच्छन्ति तदा सर्वदेत्यर्थः वरं इष्टार्थं जातावेकवचनम्। न वितरति किम्? वितरत्येवेत्यर्थः। प्रतिदत्ताक्षरमिदं चित्रम् ॥६०॥

**महीड्यो लङ्कायाः पतिरमलचित्तोऽमृतवचाः**
**इति प्राहुर्नित्यं सदसि ननु सर्वेऽपि विबुधाः ।**
**अहं हीदृङ्मान्यो जनकतनये किं नु बहुना किमेवं**
**रे पापिन् कथयसि मुदे नो भवति मे ॥६१॥**

महीड्य इति ॥ ननु जनकतनये! सर्वेऽपि विबुधाः देवाः "लङ्कायाः पतिः रावण इति यावत् महीड्यः मह्या लक्षणया महीस्थाखिलजनैरित्यर्थः ईडितुं स्तोतुं योग्यः जगदसाधारणगुण-विशिष्टतयेति भावः अमलचित्तः अमलमकलुषं चित्तं यस्य स तथोक्तः अमृतवचाः अमृतमिवास्वाद्यं वचो यस्य स तथोक्तः" इति नित्यं सदसि सभायां सुधर्मायामित्यर्थः प्राहुः प्रशंसन्तीत्यर्थः ईदृक् देवैरपि प्रशस्यमानः अहं मान्यो हि माननीय एव त्वयेति शेषः बहुना बहुभिर्वचनैरित्यर्थः किं नु? एतावतैव "अयं पर-मोत्कर्षवान्" इति ज्ञातुं शक्यत्वादिति भावः ॥

सीता प्रत्याह—

रे पापिन्! एवं किं किमर्थं कथयसि? मे मम मुदे सं-तोषाय सन्तोषं कर्तुमित्यर्थः क्रियार्थेत्यादिना चतुर्थी । नो भवति तव कथनं मम संतोषकरं न भवतीत्यर्थः ॥

प्रत्युक्तिगूढार्थस्तु—

रे पापिन्! एवं मकारवैशिष्ट्येन किं किमर्थं कथयसि? एवं कथनं मम संतोषकरं न भवतीत्यर्थः तर्हि कथं कथनीय-

मिति चेदाह—मे मकारस्थाने कथित इति शेषः । नः नकारः मुदे भवति मकारस्थानापन्ननकारतया कथयासि यदि तदेदं वचनं संतोषकरं भवतीत्यर्थः ॥

एवं च—

न हीडयो लङ्कायाः पतिरनलचित्तोऽनृतवचाः
इति प्राहुर्नित्यं सदसि ननु सर्वेऽपि विबुधाः ।
अहं हीदृङ्नान्यो जनकतनये किं नु बहुना ॥

इति कथनीयमिति फलितम्—

ननु जनकतनये ! सर्वेऽपि विबुधाः पण्डिताः "विबुधो ज्ञे सुरे" इति कोशः । "लङ्कायाः पतिः ईड्यः न हि नैव दुर्गुणत्वादिति भावः अनलचित्तः अनलोऽग्निरिव चित्तं यस्य स तथोक्तः अतिक्रूरतया अग्निवत् संतापकर इत्यर्थः अनृतवचाः अनृतानि असत्यानि वचांसि यस्य स तथोक्तः" इति नित्यं सदसि न तु रहसीत्यर्थः प्राहुः निन्दन्तीति यावत् । ईदृक्—विबुधैः निन्द्यमानो दुर्गुणशालीत्यर्थः अहं हि अहमेव अन्यः न नास्ति बहुना किं नु? एतावतैव अयमतिदुष्ट इति ज्ञातुं शक्यत्वादिति भावः दुष्टस्य मे प्रतीकारः अचिरात् कर्तव्य एवेति ध्वन्यते । इदं च प्रतिदत्ताक्षरम् । वृत्तं शिखरिणी ॥ ६१ ॥

**हस्ता नन्वतिलाघवान्मम हितास्सर्वे सहाया इमे पक्षा एव ममाखिला जनकजे ये सन्ति**

**लोकत्रये । पत्त्योघो मम सज्ज एव पुरतः कार्या न भीतिस्त्वंया मैवं जल्प पदेपदे विमुखता ते वाचि मे रोचते ॥ ६ २ ॥**

एतावदुक्त्वा प्रतिवचनं सीतया धिकृतोपि काममोहितो रावणः "मद्वचनैरियं मय्यनुरक्तवत्यपि स्वानुरागप्रदर्शने स्वजनात् बिभेति" इति भ्रान्त्या विजानन् तदनुगुणमेवमाह—

**हस्ता** इति ॥ ननु जनकजे! अतिलाघवात् बाणप्रयोगादिकार्येषु अतिवेगवत्त्वात् मम हिताः हितकराः इमे परिदृश्यमानाः सर्वे विंशतिसंख्याका इत्यर्थः हस्ताः कराः सहायाः सहायभूताः एतेष्वेकोपि न कुण्ठित इति भावः । ईदृशस्य महाहस्तस्य मम सहायान्तरापेक्षा नैव अथापि यदि कदाचिदितरसाहाय्यमपेक्ष्यते तदा तदप्यदुर्लभमेवेत्याह पक्षा इत्यादिना— लोकत्रये त्रिलोक्यां ये सन्ति त इत्यध्याहार्यम् । ते अखिलाः मम पक्षा एव सहाया एव "**पक्षस्सहाये**" इत्यमरः । विजितजगत्त्रयस्य मम को वा विपक्ष इति भावः जगत्त्रयसाहाय्यं लब्धवतोपि दूरस्थसहायस्य ते अकस्मादात्यर्थिके प्राप्ते सति कथं नु कर्तव्यमिति चेदाह—पत्त्योघः पत्तीनां पदातीनां ओघः बृन्दं "**पदातिपत्तिपदगपादातिकपदाजयः**" इत्यमरः । मम पुरतः अग्रे सज्ज एव धनुर्बाणादिसकलसन्नाहवानस्त्येवेत्यर्थः । अत इति शेषः त्वया भीतिः—यः कोपि मदीयो जनः अत्रागत्य रावणानुरक्तां

मां अवलोक्य किं वा कुर्यादित्याकारिका भीः न कार्या। ईदृश-महासहायभाक् महावीरोऽहं अतुलपराक्रमशालिनमपि विरोधिनं क्षणादेव हन्यामिति भावः ॥

सीता प्रत्याह—

नीचेत्यध्याहार्यम्। नीच! एवं मा जल्प ते वाचि वचने पदेपदे प्रतिवाक्यं पदशब्दो वाक्यपर इति पूर्वमेव व्याख्यातम्। "**पदं शब्दे च वाक्ये च व्यवसायापदेशयोः। श्लोकपादेऽपि च क्लीबम्**" इति विश्वकोशात्। विमुखता पराङ्मुखत्वं मे मह्यं रोचते मत्प्रीतिविषया भवति "एतदुक्तं वाक्यमेकमपि अनाकर्णनीयं प्रत्युत्तरं च न देयम्" इत्यहमिच्छामीत्यर्थः ॥

प्रत्युक्तिगूढार्थस्तु—

नीच! एवं मा जल्प ते वाचि पदेपदे प्रतिपादं अत्र पदशब्दः पादपरः पूर्वोक्तकोशात्। विमुखता विः वीत्याकारको वर्णः मुखे आदौ यस्य तस्य भावः मे रोचते त्वदुक्तं पादत्रयमपि आदितः वीत्याकारकेण वर्णेन संयोज्य वक्तव्यमित्यहमिच्छामीत्यर्थः ॥

एवं च—

विहस्ता नन्वतिलाघवान्मम हितास्सर्वे सहाया इमे
विपक्षा एव ममाखिला जनकजे ये सन्ति लोकत्रये ॥
विपत्त्योघो मम सज्ज एव पुरतः कार्या न भीतिस्त्वया ॥

इति वाच्यमिति फलितम् ॥

जनकजे! मम अतिलाघवात् अत्यन्तनैच्यात् हिताः हितकराः सर्वे सहायाः बन्धुमित्रादयः विहस्ता ननु व्याकुला एव नन्वित्यवधारणे "विहस्तव्याकुलौ समौ" इत्यमरः। नीचकार्यप्रवृत्तं मामवलोक्य हितास्सर्वे नितरां दूयन्त इत्यर्थः। लोकत्रये ये सन्ति इमे अखिलाः मम विपक्षा एव विरोधिन एव लोकहिंसके दुरात्मनि को वा स्निह्येदिति भावः। मम पुरतः विपत्त्योघः विपत्परम्परा सज्ज एव बहुजनविरोधिनो विनाशस्सिद्ध एवेति भावः अत इति शेषः त्वया भीतिः—एष रावणो मां किं वा कुर्यादित्याकारिका भीः न कार्या त्वं मा भैषीरित्यर्थः। विनाशोन्मुखं दुरात्मानं मामचिरादेव भगवान् श्रीरामः निहत्य त्वां प्राप्स्यति अतस्त्वया धैर्यमवलम्बनीयमिति भावः। अधिदत्ताक्षरमिदं चित्रम् ॥६२॥

**श्रुत्वा वादमिमं समीरजमुखाद्रामः क्रुधा रावणे सुग्रीवप्रमुखैः प्रयाय जलधौ निर्माप्य सेतुं शुभम्। लङ्कामेत्य निहत्य रावणमुखांस्तां प्राप्य सीतां स्तुतां साकेतं समुपेत्य सोदरयुतः पृथ्वीं चिरादन्वशात् ॥६३॥**

श्रुत्वेति ॥ रामः समीरजमुखात् समीरजस्य हनूमतः मुखात् वदनात् इमं पूर्वोक्तं पञ्चाशत्पद्यात्मकं गूढोक्तिवैचित्र्यघटितं वादं सीतारावणसंवादं श्रुत्वा रावणे रावणविषये क्रुधा क्रोधेन रावणाय

क्रुध्यन्नित्यर्थः सुग्रीवप्रमुखैः सुग्रीवादिभिः कपिभिस्सह "**सह-युक्तेऽप्रधाने**" इति तृतीया। प्रयाय प्रस्थाय जलधौ दक्षिण-समुद्रे शुभं दर्शनमात्रेणैव सर्वेषां पापनिवारणद्वारा कल्याणप्रदम्। तदुक्तं भगवता पराशरेण—**सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्य-पोहति**" इति। सेतुं निर्माप्य कारयित्वा लङ्कां एत्य प्राप्य रावणमुखान् रावणादीन् निहत्य तां रावणेन अशोकवने निक्षि-प्तामित्यर्थः स्तुतां परमपातिव्रत्येन ब्रह्मादिभिस्सर्वैस्संनुतां सीतां प्राप्य साकेतं अयोध्यां समुपेत्य आसाद्य सोदरयुतः सोदरैः भरतलक्ष्मणशत्रुघ्नैः युतस्सन् पृथ्वीं चिरात्—**दशवर्षसहस्राणि दशवर्षशतानि च। भ्रातृभिस्सहितश्श्रीमान् रामो राज्य-मचीकरत्**" इति रामायणोक्तरीत्या एकादशसहस्राणि वर्षाणीत्यर्थः अन्वशात् अनुशशास शास्तेर्लङ्। युद्धकाण्डकथाऽत्र संक्षिप्ता ॥६३॥

**दुर्बुद्धिर्दशकन्धरस्स बहुधा श्रीजानकीसन्निधौ**
**तत्प्राणेश्वरमप्रमेयविभवं श्रीरामचन्द्रं विभुम्।**
**वाग्जालेन निनिन्द येन परुषं तस्यानुवादेन मे**
**जातं सर्वमघं निवार्य कृपया पायात्स देवस्सदा ॥**

अथ कविः भगवति स्ववागपराधक्षमां प्रार्थयते—

**दुर्बुद्धिरिति** ॥ दुर्बुद्धिः परमपतिव्रतां श्रीसीतामपि कामयमान इत्यर्थः सः दुष्टत्वेन प्रसिद्धः दशकन्धरः रावणः श्रीजानकीसन्निधौ तत्प्राणेश्वरं तस्याः श्रीजानक्याः प्राणेश्वरं प्राणकान्तं अप्रमेयविभवं

अचिन्त्यवैभवं श्रीरामचन्द्रं विभुं देवं बहुधा अनेकप्रकारैः येन—"हे सीते प्रतिसंभ्रमो मम यथा कार्येषु पत्युर्न ते सर्वत्रापि निजोद्यमेषु स खलु ख्यातो महासंशयः" इत्यादिना वाग्जालेन परुषं कठिनं यथा तथा निनिन्द तस्य वाग्जालस्य अनुवादेन अनुवदनेन जातं मे सर्वं अघं दुरितं कृपया निवार्य सः सकलदुरितनिवारकत्वेन प्रसिद्धः देवः भगवान् श्रीरामः सदा पायात् ॥ ६४ ॥

**साष्टपञ्चसहस्रेषु कल्यब्देषु गतेष्विह ।**
**प्लवङ्गाब्दज्येष्ठकृष्णद्वितीयागुरुवासरे ॥ ६५ ॥**
**सीतारावणसंवादझर्या भागोऽयमुत्तरः ।**
**प्रसादाज्जानकीजानेरगमत्परिपूर्णताम् ॥ ६६ ॥**

अथ युग्मेन एतद्ग्रन्थरचनाकालमाह—

साष्टेति ॥ इह भूमौ साष्टपञ्चसहस्रेषु—अष्टोत्तरपञ्चसहस्रसंख्येषु कल्यब्देषु कलिवर्षेषु गतेषु अतीतेषु सत्सु प्लवङ्गाब्दज्येष्ठकृष्णद्वितीयागुरुवासरे अयं सीतारावणसंवादझर्याः उत्तरः भागः जानकीजानेः जानकी जाया यस्य तस्य श्रीरामस्य "जायाया निङ्" इति निङादेशः । प्रसादात् हेतोः परिपूर्णतां समाप्तिं अगमत् ॥ ६५-६६ ॥

**ग्रन्थेऽस्मिन् चपलेन मन्दमतिना यत्नान्मया**
**निर्मिते दोषा यद्यपि सन्त्यथापि खलु मे कर्तुर्न**

**दृग्गोचराः ॥ दोषज्ञास्सदयं सदा सहृदयास्संशोध्य तान् सादरं तुष्यन्तोत्र गुणग्रहेण सफलीकुर्वन्त्विमं मे श्रमम् ॥ ६७ ॥**

अथ विदुषः प्रार्थयते—

**ग्रन्थ इति** ॥ चपलेन मन्दमतिना यत्नात् यत्नमाश्रित्य निर्मिते विरचिते अस्मिन्– सीतारावणसंवादझर्युत्तरभागनाम्नि ग्रन्थे दोषाः सन्ति यद्यपि सन्त्येव यद्यपीत्यवधारणे। तथा च कालिदासः—मनुप्रभृतिभिर्मान्यैर्भुक्ता यद्यपि राजभिः इति। अथापि दोषाणां सर्वेऽपि ते दोषाः कर्तुः मे दृग्गोचराः ज्ञानविषयाः न खलु नैव। तान् दोषान् सदा सहृदयाः समानहृदयाः निर्मत्सराइत्यर्थः दोषज्ञाः दोषान् जानन्तीति दोषज्ञाः विद्वांसः "दोषज्ञौ वैद्यविद्वांसौ" इत्यमरः। सदयं सादरं च संशोध्य अत्र परिशोधिते ग्रन्थ इत्यर्थः गुणग्रहेण गुणग्रहणेन तुष्यन्तः इमं विद्वद्भिर्ज्ञायमानमित्यर्थः मे श्रमं सफलीकुर्वन्तु। ग्रन्थरचनाश्रमस्य विद्वत्परितोषैकफलत्वादिति भावः ॥ ६७ ॥

**ईदृग्दुष्करचित्रबन्धरचनाक्लेशं विजानाम्यहं सर्वज्ञो भगवान् स वेत्ति स च मे साहित्यविद्यागुरुः ॥ चित्तेनावहितेन मे कृतिमिमां दृष्ट्वा रसास्वादनात् संतुष्टा रसिका बुधा अपि विदुर्जानीयुरन्ये कथम् ॥ ६८ ॥**

ईदृगिति ॥ ईदृग्दुष्करचित्रबन्धरचनाक्लेशं—ईदृशः दुष्करस्य दुःखेन कर्तुं शक्यस्य श्रमसाध्यस्येत्यर्थः चित्रबन्धस्य चित्रकाव्यस्य रचनीयां यः क्लेशः तं अहं विजानामि चिरकालानुभवादिति भावः । सर्वज्ञः सर्वं जानातीति सर्वज्ञः सः भगवान् परमेश्वरः वेत्ति । सर्वज्ञत्वादेवेति भावः । स प्रसिद्धः मे साहित्यविद्यागुरुश्च वेत्ति तस्यापीदृशग्रन्थकर्तृत्वादिति भावः । अवहितेन सावधानेन चित्तेन मे इमां कृतिं दृष्ट्वा विचार्य रसास्वादनात् स्वारस्यग्रहणात् संतुष्टाः रसिकाः रसज्ञाः बुधा अपि विद्वांसश्च विदुः जानन्ति । अन्ये अरसिका अविद्वांसश्चेत्यर्थः कथं जानीयुः? न जानीयुरेवेत्यर्थः ॥६८॥

**ईदृग्वीक्षाश्रमो नः कुत इति विदुषामत्र माभूदुपेक्षा व्याख्या चातिश्रमो मास्त्विति ननु कलिता नस्तथाऽपि श्रमो हि । इत्युक्तौ प्रार्थये कानहह जगति किं द्रष्टुमर्हन्ति मूढाः दृश्यं सुज्ञैरवश्यं कथमपि च न चेद्धन्त मोघोद्यमस्स्याम् ॥६९॥**

ईदृगिति ॥ "ईदृग्वीक्षाश्रमः ईदृशः ग्रन्थस्य वीक्षया विचारेण यश्श्रमस्सः नः सरलहृदयानामस्माकं कुतः?" इति अत्र एतद्ग्रन्थविचारे विदुषां उपेक्षा औदासीन्यं माभूत् कुत इति चेदाह—"अतिश्रमः द्रष्टॄणां महान् बुद्धिक्लेशः मास्तु" इति हेतोः व्याख्या च व्याख्यानमपि कलिता ननु विरचिता खलु नन्वित्यनुनये "तथाऽपि व्याख्यानसत्त्वेऽपि नः अस्माकं श्रमो हि क्लेश एव" इति उक्तौ सत्यामित्यर्थः जगति कान् प्रार्थये?

अहहेति खेदे प्रार्थनीयाः न केऽपि सन्तीति खेदः । अस्माकमुपेक्षायामपि जगति अन्ये ये वा के वा पश्यन्त्येवेत्यत आह—मूढाः मन्दमतयः द्रष्टुं एतत्काव्यमिति शेषः अर्हन्ति किम्? नार्हन्तीत्यर्थः अस्य काव्यस्य विद्वद्भिरेव द्रष्टव्यत्वादिति भावः। कथमपिच अतिप्रयत्नेन सुज्ञैः विद्वद्भिः अवश्यं दृश्यं द्रष्टव्यम्। एतत्काव्यमिति शेषः । न चेत् विद्वद्भिरिदं न दृश्यते यदि तदा मोघोद्यमः व्यर्थोद्योगः स्यां भवेयम्। हन्तेति खेदे। अतो विद्वद्भिर्द्रष्टव्यमेवेति भावः॥ ६९॥

**यस्य श्रीरामभट्टो हरितकुलपयोराशिराकासुधांशुः ख्यातो गुण्डावधानीत्यपि विबुधकुलोत्तंसकस्तात आसीत्। माता पार्वत्यभिख्या महितकुलवधूसन्निधौ कीर्तनीया सीतारामस्य सीतारमणकरुणया वागियं तस्य जीयात्॥ ७०॥**

अथ कविः स्वकीर्त्यनुवृत्तये स्वजन्मनामनिर्देशपूर्वकं ग्रन्थस्य भगवदनुग्रहमाशास्ते—

**यस्येति॥** "श्रीरामभट्टः" इति, "हरितकुलपयोराशिराकासुधांशुः हरितकुलमेव पयोराशिः क्षीरसमुद्रः तस्य राकासुधांशुः पूर्णचन्द्रः" इति, "गुण्डावधानी" इत्यपि ख्यातः प्रसिद्धः विबुधकुलोत्तंसकः उत्तंस एव उत्तंसकः स्वार्थे कः। शिरोभूषणं विबुधकुलस्य विद्वदोघस्य उत्तंसकः विद्वत्पुङ्गव इति यावत्।

यस्य ग्रन्थकर्तुः तातः जनकः आसीत् महितकुलवधूसन्निधौ महितं पूजितं कुलं — यासां तासां वधूनां साध्वीनामित्यर्थः सन्निधौ कीर्तनीया "कीर्तयितुं योग्या पार्वत्यभिख्या पार्वत्यम्बाभिधाना यस्येत्यनुवर्तते माता जननी आसीत् । सीतारामस्य सीतारामनाम्नः तस्य इयं—सीतारावणसंवादझर्युत्तरभागात्मिका वाक् सीतारमणकरुणया श्रीरामचन्द्रप्रसादेन । जीयात् विजयताम् । आशिषि लिङ् ॥ ७० ॥

**अस्तु स्वस्ति प्रजाभ्यो निखिलमिह जगत्यायुरारोग्यसम्पच्छाली कर्णाटदेशं चिरमवतु मुदा कृष्णराजेन्द्रभूपः । जीयादाचन्द्रतारं रसिकजनमनोरञ्जिनी वाक्कवीनां नॄणां भक्तिश्च नित्यं भवतु जनकजारामपादारविन्दे ॥ ७१ ॥**

"मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते" इति भगवद्भाष्यकारवचनमनुरुद्ध्य ग्रन्थान्ते श्लोकत्रयेण मङ्गलमाशास्ते—

**अस्त्विति** ॥ इह जगति सर्वत्रेत्यर्थः प्रजाभ्यः जनेभ्यः निखिलं आयुरारोग्यसंपदादिकमित्यर्थः स्वस्ति शिवं अस्तु "**नमस्स्वस्ति**" इत्यादिना चतुर्थी । सर्वाः प्रजास्सकलकल्याणसम्पदन्वितास्सन्त्वित्यर्थः । कृष्णराजेन्द्रभूपः श्रीकृष्णराजमहाप्रभुः आयुरारोग्यसंपच्छाली आयुरारोग्यसंपद्भिः शालत इति तादृशस्सन् कर्णाटदेशं चिरं बहुकालं मुदा संतोषेण अवतु रक्षतु । रसिकजन-

मनोरञ्जिनी कवीनां वाक् वाच इत्यर्थः आचन्द्रतारं आ चन्द्रताराभ्यः आचन्द्रतारं चन्द्रश्च ताराश्च यावद्वर्तिष्यन्ते तावदित्यर्थः जीयात्। किं चेति चार्थः जनकजारामपादारविन्दे—जनकजारामयोः श्रीसीताराघवयोः पादारविन्दे नृणां भक्तिरनुरागः नित्यं सर्वकालं भवतु वर्तताम् ॥७१॥

**परमविनतवातापत्यभव्योक्तिगीता**
**निजपदनतिधूताशेषभक्ताघजाता ।**
**मुखजितजलजाता मेदिनीगर्भजाता**
**हृदि विलसतु सीता सर्वदा लोकमाता ॥**

**परमेति** ॥ परमविनतवातापत्यभव्योक्तिगीता—परमविनतेन महाभक्तेन वातापत्येन मारुतिना भव्याभिः सुशब्दघटिताभिरित्यर्थः उक्तिभिः गीता संनुता निजपदनतिधूताशेषभक्ताघजाता—निज-पदनत्या स्वचरणप्रणामेन धूतं परिहृतमित्यर्थः अशेषाणि यानि भक्तानां अघानि पापानि व्यसनानि वा तेषां जातं ओघः यया सा **"जातं व्यक्तौघजन्मसु"** इति त्रिकाण्डशेषः। मुखजितजल-जाता—मुखेन जितं जलजातं कमलं यया सा ध्यानानुकूल-प्रसन्नवदनेति भावः। मेदिनीगर्भजाता—मेदिन्या गर्भे उदरे जाता अयोनिजत्वात् परमपावनीत्यर्थः। सर्वदा सर्वान् इष्टार्थान् ददा-तीति तादृशी । लोकमाता जगज्जननी श्रीलक्ष्मीस्वरूपेत्यर्थः । **"इन्दिरा लोकमाता मा रमा मङ्गळदेवता"** इत्यमरः। सीता हृदि नश्चित्ते विलसतु. सर्वदा सर्वकालं हृदि विलसतु इति वा ॥

**श्रीसाकेतसमुद्रभूरधिवसन् योगीन्द्रहृन्नन्दनं पूर्णः कान्तिसुमैश्श्रितावनफलस्त्रय्यालवालाश्चितः। सत्कारुण्यरसोज्ज्वलो जनकजाच्छायाभिरामोऽनिशं श्रीमान् दाशरथिः प्रकल्पयतु नः कल्याणपारम्परीम् ॥ ७३ ॥**

श्रीसाकेतेति ॥ श्रीसाकेतसमुद्रभूः श्रीयुक्तं यत्साकेतं अयोध्यापत्तनं "स्यात्साकेतमयोध्यायाम्" इत्यमरः। तदेव समुद्रः क्षीरसागर इति यावत्। तस्माद्भवतीति तथोक्तः भवतेः क्विप्। भगवज्जन्मभूमेस्साकेतस्य समुद्रत्वरूपणेन तत्र समुद्र इव रत्नादिसमृद्धिः द्योत्यत इत्यलंकारेण वस्तुध्वनिः। योगीन्द्रहृन्नन्दनं—योगीन्द्राणां सनकादीनां हृदेव नन्दनं इन्द्रोद्यानं अधिवसन् अधितिष्ठन् सर्वदा तत्र वर्तमान इति यावत् "उपान्वध्याङ्वसः" इत्याधारस्य कर्मत्वम्। नन्दनत्वरूपणेन यथा नन्दनस्य फलपुष्पादिसमृद्धत्वं तथा भगवदधिष्ठितस्य योगीन्द्रहृदयस्य विलसच्छमदमादिगुणसमृद्धत्वं व्यज्यते। कान्तिसुमैः कान्तयस्तेजांस्येव सुमानि पुष्पाणि तैः पूर्णः भरितः सुमत्वरूपणेन सुमानामिव भगवत्कान्तीनां हृद्यत्वं सुकुमारत्वं च प्रतीयते। श्रितावनफलः श्रितानामाश्रितानां अवनानि रक्षणानि अवनस्य विविधतया बहुवचनम्। तान्येव फलानि यस्य स तथोक्तः अवनानां फलत्वरूपणेन भूमाववतीर्णस्य भगवतः आश्रितजनरक्षणमेव मुख्यमिति व्यज्यते। त्रय्यालवालाश्चितः—त्रयी ऋग्यजुस्सामानि सैव आलवालं वृक्षमू-

लवर्तुलसेतुः तेन अश्रितस्सेवितः त्रय्या आलवालत्वरूपणेन भग वतः स्वमहिमोत्कर्षपरिपोषकनिगमानिचयान्तराविभासित्वं प्रकाश्यते। सत्कारुण्यरसोज्ज्वलः—सत् श्रेष्ठं अक्षय्यमित्यर्थः यत् कारुण्यं करुणा स्वार्थे ष्यञ् तदेव रसः द्रवः तेन उज्ज्वलः प्रकाशमानः कारुण्यस्य रसत्वरूपणेन यथा रसः स्वाश्रयं साकल्येन व्याप्य तिष्ठति तद्वत् भगवन्मनःकारुण्यमिति भगवन्मनसः कारुण्यमयत्वं तेन च भगवत्युत्कर्षः प्रतीयते। जनकजाच्छायाभिरामः—जनकजा सीता सैव छाया अनातपः "**छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः**" इत्यमरः। तया अभिरामः दर्शनीयः जनकजायाश्छायात्वरूपणेन आश्रितजनसंतापहारित्वं भगवदविनाभूतत्वं च द्योत्यते। न च कथं चिरवियुक्तायास्सीतायाः छायाया इव अविनाभूतत्वमिति शङ्क्यम्। कदाचित् मानुषलीलाविडम्बनेन भगवदविनाभूतत्वभङ्गेऽपि देव्याः विष्णोरेषाऽनपायिनीति सर्वदा भगवत्सान्निध्यस्य सिद्धत्वात्। जनकजाच्छायेत्यत्र "**पदान्ताद्वा**" इति तुगागमः। श्रीमान् अनितरसाधारणसंपद्युक्तः दाशरथिः रामः नः अस्माकं कल्याणपारम्परीं मङ्गलपरंपरां परम्पराशब्दात् स्वार्थे अण्। अनिशं संततं प्रकल्पयतु कलयतु। श्रीसाकेतादिषु समुद्रत्वादिरूपणैः भगवति श्रीरामे कल्पतरुत्वं गम्यत इति एकदेशविवर्तिपरम्परितरूपकमलङ्कारः। एवं च अखिलकल्याणसंपत्साधकं भगवतस्स्मरणमेव जन्मिनां सारतरमिति सर्वमनवद्यम्॥ ७३॥

ॐ तत्सत्